अस्ति हि सर्वेषां ग्रन्थकृतामभिमतमिदं मतम्—

आदौ प्रकृतसिद्ध्यर्थमुपोद्घातं विदुर्बुधाः ।

इति । प्रकरणप्रतिपाद्यस्य मुख्यस्य प्रमेयसर्वस्वस्य हि मध्ये मध्ये प्रासङ्गिकैः प्रमेयान्तरैर्मुख्याङ्गभूतैर्व्यवहितस्यात एव विप्रकीर्णस्येव विलम्बोपस्थितिजनितेन चित्तविक्षेपेणाक्षिप्तं व्यामोहं निवारयितुं सद्य एव च सहृदयानां हृदये संक्षिप्तेन महावाक्यार्थेन तत् संनिवेशयितुमुपोद्घातेन पीठिकाबन्धो निबध्यते ॥

इह हि श्रीभगवान् वासुदेवः परमात्मस्वरूपः परमेश्वरो, विश्वसृष्टिसंहाराणां कर्ता, सर्वज्ञः सर्वशक्तिः सर्वानुग्राहकश्चतुरांशत्वेन सर्वात्मा, स्थानशरीरेन्द्रियाद्युत्पादनद्वारेणैव तत्र तत्रानुग्रहस्य कर्तुं शक्यत्वादिति वक्ष्यमाणप्रमाणोपपत्त्या धर्मसंरक्षणार्थं धृतशरीरः, कुरूणामन्योन्यं वैरं निमित्तीकृत्य भुवो भारमपजिहीर्षुः, सर्वेषामेव वर्णिनामाश्रमिणां वर्णाश्रमेतराणां च यथावच्चतुर्वर्गप्राप्त्युपायस्य कर्मणः प्रदर्शके श्रीमहाभारतेऽस्मिन् भीष्मपर्वणि प्राक्रान्ते युद्धे गुरुपितृभ्रातृमित्रसुहृदां सर्वथा पालनीयानामेव मोहात् परिपन्थीभूय युद्धाय पुरोऽवस्थितानामवध्यानां वधशङ्कया 'जुगुप्सितं हि युद्धमेतन्मया न कर्तव्यम्' इत्युत्पन्नेन वैराग्येण युद्धकर्म संन्यस्य नैष्कर्म्ये एव निःश्रेयससाधनतानिश्चयात्—

विहितस्याननुष्ठानान्निन्दितस्य निषेवणात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

इति स्मृत्या वर्णाश्रमधर्माणां श्रुतिस्मृतिष्ववश्यानुष्ठेयत्वेन विहितत्वात् क्षत्रियस्यावश्यकर्तव्यतया प्राप्तस्य युद्धस्याननुष्ठानेन अविहितस्य निषिद्धस्य तु युद्धात् पलायनरूपस्य स्वधर्मत्यागस्यानुष्ठानात् पतनोन्मुखस्य स्वप्रियसुहृदस्य समुद्धरवाचोयुक्त्या चतुर्णामपि वर्णानामाश्रमाणां च ज्ञानसमुच्चितेन विहितेन स्वकर्मणा निःश्रेयसप्राप्तिरिति—न तु नैष्कर्म्ये सति ज्ञानमात्रादिति—इत्थं सर्वश्रुतिस्मृतिप्रमाणगर्भितमिदं गीताप्रकरणमवसरप्राप्त्या मुक्त्युपायभूतं

१ प्रायश्चित्तविवेके इति शब्दकल्पद्रुमः । श्लोकादौ 'भिक्षु' इत्यधिकम् ।

सर्वजगतामनुग्रहार्थमुपदिदेश ॥ ज्ञानं चात्र भगवतो वासुदेवस्य प्रकृतिपुरुषकालेश्वरतया चतुरंशस्य सकलश्रुतिस्मृतिपुराणप्रसिद्धैः सर्वात्मना ज्ञानं विवक्षितम् । तच्चात्र यथावत् तत्र तत्रोद्देशलक्षणपरीक्षाभिर्निर्णयकारणत्रयेणात्र शास्त्रेऽवश्यसंभावनीयेन निर्णीयते मया[1] ॥

तथा च शास्त्रावतारणिकायामुपदिष्टमभिनवगुप्तपादैः —

इत्थं संविदियं देवी स्वभावादेव सर्वदा ।
उद्देशादित्रयप्राणा सर्वशास्त्रस्वरूपिणी ॥
प्राक् पश्यन्त्यथ मध्यान्ता वैखरीति च ता इमाः ।
इच्छादिशक्तित्रितयमिदमेव निगद्यते ॥
एतत्प्राणित एवायं व्यवहारः प्रतायते ।

इति । तथा चास्यार्थः । शास्त्रं हि निर्णयात्मकम् । निर्णयश्च प्रायशः संशयित एवार्थे प्रवर्तते । अर्थस्तूपलब्ध एव संशयविषयीभवति, न त्वनुपलब्धोऽपि । तस्य च संशयितस्यार्थस्य प्रश्न एवोपपादनम् । प्रश्ननिर्णयाय च प्रारभ्यमाणस्य शास्त्रस्य त्रिधा प्रवृत्तिः,—उद्देशो लक्षणं परीक्षा चेति ॥ वक्ष्यमाणान्तविशेषणा साकाङ्क्षानुगुणसामान्याकारेण वाक्यसृष्टिरुद्देशः । अत्र संशयप्रश्नानामन्योन्याभिप्रायानुषङ्गेणानुद्घाटितवस्तुस्वरूपप्रथनं समानं रूपम् ॥ इतरपरावृत्तेः कारणमसाधारणस्तत्त्वावबोधको धर्मो लक्षणम् । अत्र च तत्त्वावबोधोपकरणं प्रश्नापादितदूषणोद्धारणमुत्तरम् । तत्त्वावबोधो निर्णयः । एषामुत्तरलक्षणनिर्णयानां प्रतिनियतस्वरूपाविष्करणं समानं रूपम् ॥ नियतलक्षणलक्षिता निर्णयविषयीभूता ये केचन वस्तुधर्मास्तेषु पौनःपुन्येन यः समुद्देशः, यच्चात्रैव साधारणासाधारणधर्मनिरूपणं नाम लक्षणम्, तदात्मकं पुनः पुनः परितः सर्वतो निःशेषप्रतिपक्षप्रतिक्षेपेणेक्षणं विचारणं परीक्षेति । अस्ति चेयं परिपाटी महाभारतेऽत्र तेषु तेष्वितिहासेषु ॥ तदित्थमस्मिन् गीताशास्त्रे मोक्षप्रकरणे चतुर्णां प्रकृत्यादीनां प्रथमेऽ-

१ 'मया' इति लेखकान्तरेण मध्येपङ्क्ति लिखितम् ।

२ मातृकायां 'शर्व' इति प्रामादिकः पाठः ।

ध्यायषट्के उद्देशः, मध्यमे लक्षणम्, अन्त्ये परीक्षा, इति त्रिपर्वेयं गीता ॥

अथात्र शुश्रूषूणां सहृदयानां हृदये सद्यो वक्ष्यमाणपदार्थतत्त्वसंनिवेशान्निःश्रेयससाधनस्य ज्ञानकर्मसमुच्चयस्य प्रतिपादकेषु श्रुतिस्मृतिप्रमाणेषु प्रथमं तावत् सर्वप्रमाणवर्गसंजीविन्यात्मिकाः श्रुतयो यथा—

अन्धं तमः प्रविशन्ति ये अविद्यामुपासते ।
ततो भूय एव ते तमो ये विद्यायां रताः ॥

इति[1] । अत्रायमर्थः । अविद्याविद्याशब्दौ कर्मज्ञानार्थवाचकौ । ये मूढा अविद्यां कर्मैव ज्ञानं विनोपासते तेऽन्धं तमः प्रविशन्ति । ये तु नियतं कर्म त्यक्त्वा विद्यायामात्मज्ञान एव केवले रतास्ते भूयो बहुतरमेवान्धं तमः प्रविशन्ति । भूयस्त्वस्य त्वयमर्थः । नियतकर्मानुष्ठानं विना केवलादात्मज्ञानाच्छ्रेयःप्राप्तिसंज्ञस्य फलस्यानिष्पत्तिरेव केवलं न, किंतु प्रत्यवायोऽपि, नित्याकरणात् ॥ तदेवं केवलं कर्म केवलं ज्ञानं च निन्दित्वा समुच्चितयोरनयोः श्रेयःसाधनतां श्रुतिरेवाह—

विद्यां चाविद्यां च यस्तद्वेदोभयम् ।
सोऽविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥

इति[2] । चशब्दावत्र समुच्चयार्थौ । विद्यामात्मज्ञानमविद्यां कर्म च उभयं समुच्चितं तन्निःश्रेयससाधनं यो वेद जानाति सोऽविद्यया कर्मणा मृत्युं मृत्युतुल्यं विहिताकरणोद्भवं पापमेव मोक्षान्तरायं तीर्त्वा विद्ययात्मज्ञानेनामृतं मोक्षं प्राप्नोति । अत्र मोक्षसाधनभूताया विद्याया विघ्नतरणरूपमुपायं जनयद्भिः कर्मभिः साङ्गाङ्गिभावलक्षणः समुच्चयः सिद्धः ॥

ननु कर्मणां मृत्युतरणमात्रहेतुत्वादत्रैवोपक्षये कथं मोक्षं प्रत्यङ्ग-

---

१ ईशावास्योपनिषद्, मन्त्रः ९ । तत्र 'भूय इव ते तमो य उ' इति पाठः ।

२ ईशावास्योपनिषद्, मन्त्रः ११ । प्रथमार्धे 'सह' इत्यन्तेऽधिकं, द्वितीये च उत्तरार्धारम्भे 'अविद्यया' इति तत्रत्यपाठभेदौ ।

नीति चेत्, सत्यं यद्येवं कर्मणां मृत्यूत्तरणमात्र एव हेतुत्वमभिप्रेतं स्यात् तर्हि, अविद्यया मृत्युं तरति, विद्ययामृतमश्नुते, इति द्वे वाक्ये स्याताम् । न च तथा । अत्र हि क्त्वाप्रत्ययान्ताया गुणक्रियाया मोक्षक्रियया सहैककर्तृकत्वादेकमेव वाक्यमिति कर्मणामङ्गाङ्गिभावेन मोक्षहेतुत्वं सिद्धमेव । न चैषां मृत्युतरण एवोपक्षयः ॥ तथा हि—

य आत्मानमेव लोकमुपास्ते नेहास्य कर्म क्षीयते ।

इ[1]तीयं श्रुतिः कर्मणोऽक्षयत्वं प्रतिपादयन्ती मोक्षहेतुत्वं प्रतिपादयति । कर्म हि स्वभावतः क्षयि सदपि मोक्षहेतुत्वेन हेतुहेतुमतोरभेदन्यायादक्षयत्वं भजते । अत एव कर्मणामनुपक्षपाती ॥

विविदिषन्ति ज्ञानेन तपसानाशकेन ।

इ[2]त्यस्मिन्नपि श्रुतिवाक्ये कर्मणां विद्यायामङ्गत्वमेवोक्तम् । यत्त्वत्र ब्रह्म वेदितुमिच्छायामेव कर्मणोऽङ्गत्वं न तु ब्रह्मवेदने इत्यादिकमाक्षेपकमाहुः, तत्र यथा हि 'रथेन जिगमिषति' इत्यत्र गमनक्रियायामेव प्राधान्येन विधेयायां रथस्य करणत्वेन संबन्धः, न त्विच्छायाम् ॥ तथा च दृष्टमेवेदं छान्दोग्योपनिषदि ( ८।१५ )—

कुटुम्बी शुचौ देशे वेदमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य, अहिंसन् सर्वा भूतान्यन्यत्र तीर्थेभ्यः, स खल्वेवं वर्तयन् यावदायुषं, ब्रह्मलोकमभिसंबध्यते न पुनरावर्तते ।

इ[3]त्यादि । ब्रह्मैव लोको ब्रह्मलोकः ॥

यत्त्वत्रैव छान्दोग्योपनिषदि ( २।२३।१ )—

सर्व एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वम[4]श्नुते ।

इत्यत्र यतिव्यतिरिक्तानां त्रयाणामाश्रमिणां सत्कर्मणा पुण्यलोकस्य

---

१ बृहदारण्यकोपनिषद्, १।४।१५।

२ बृहदारण्यकोपनिषद्, ४।४।२२।

३ उपनिषदि पाठभेदाः—'कुटुम्बे', 'स्वाध्यायम्', 'अभिसंपद्यते' इति ।

४ उपनिषदि पाठभेदो यथा—'एति' ।

स्वर्गादेरेव प्राप्तिः, न त्वमृतत्वं ब्रह्मीभावः। ब्रह्मसंस्थस्य यतेः संन्यस्तकर्मणस्त्वमृतीभाव इति व्याख्यातम्[१], तत्तु ब्रह्मसंस्थशब्दस्य यतिसंज्ञैकवाचकत्वे प्रमाणाभावान्न किंचित्। तस्मादेवमत्र व्याख्या। चतुर्णामाश्रमिणां मध्ये यो ब्रह्मसंस्थो ब्रह्मैकप्रवणो ब्रह्मज्ञानाङ्गभूतं कर्म कुर्वाणः सोऽमृतत्वमश्नुते ॥

यानि पुनः—

न कर्मणा न प्रजया धनेन
त्यागेनैके अमृतत्वमानशुः।
परेण नाकं निहितं गुहायां
विभ्राजते यद्यतयो विशन्ति ॥[२]

इत्यादीनि श्रुतिवाक्यानि मोक्षं प्रति कर्मणां निमित्तभावनिषेधकानि, तानि सर्वाणि तत्त्वज्ञानं विना केवलकर्मविषयाणि ज्ञेयानि। तथैव यानि कानिचित् पुराणवाक्यानि कर्मणां मोक्षं प्रति निमित्तभावनिषेधकानि भारतादिषु दृश्यन्ते—

शुकः—

यदिदं वेदवचनं कुरु कर्म त्यजेति च।
कां दिशं विद्यया याति कां च गच्छति कर्मणा ॥
एते चान्योन्यवैरूप्ये वर्तेते प्रतिकूलतः।
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम्।
शृणुष्वैकमनाः पुत्र गह्वरं ह्येतदन्तरम् ॥
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
कर्मणा जायते मर्त्यो मूर्तिमान् षोडशात्मकः।
विद्यया जायते नित्यो ह्यव्ययो ह्यव्ययात्मकः ॥
कर्माणि ये प्रशंसन्ति स्वल्पबुद्धिभरा नराः।
तेनैते देहजातानि रमयन्त उपासते ॥

---

१ शाङ्करभाष्ये अयं पक्षः सिद्धान्तत्वेन स्वीकृतः, टीकाकृन्मतं तु 'वृत्तिकारस्य' पूर्वपक्षत्वेनोत्थापितम्।

२ कैवल्योपनिषद् २, ३।

ये तु बुद्धिपथप्राप्ता धर्मनैपुण्यदर्शिनः ।
नैते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥
कर्मणा फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥

यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न हीयते यत्र गत्वा यत्र गत्वा न वर्धते ॥

इत्यादि[1]भारते 'स्वल्पबुद्धिभरा नरा' इत्यादिभिः पदैः फलाभिसन्धिवाचकैः ज्ञानहीनमेव कर्म निन्दितं, न तु ज्ञानसमुच्चितम् ॥

तथैव मार्कण्डेयो[2]ऽपि पिता पुत्रम्—

एवं संसारचक्रेऽस्मिन् भ्रमता तात सङ्कटे ।
ज्ञानमेतन्मया प्राप्तं मोक्षसंप्राप्तिकारकम् ॥
विज्ञायते यत्र सर्वमृग्यजुःसामसंज्ञितः ।
क्रियाकलापो विगुणो न सम्यक् प्रतिभाति मे ।
तस्मादुत्पन्नबोधस्य वेदैः किं मे प्रयोजनम् ॥

इत्यादावपि विगुणादिशब्देन ज्ञानं विना फलाभिसन्धिना कृतं केवलमेव कर्म निन्दितं, न तु ज्ञानसमुच्चितम् ॥

तथा च श्रेयःप्राप्तौ भूयस्तराणि ज्ञानकर्मसमुच्चयप्रतिपादकानि पुराणेषु स्मृतिवाक्यानि दर्शयामः प्रोक्तश्रुतिवाक्यार्थानुसारीणि । मनु[3]:—

तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ ।
तपसा कल्मषं हन्ति विद्ययामृतमश्नुते ॥
अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ।
तपस्याचरणैश्चोग्रैः साधयन्तीह तत् पदम् ॥
सुखाभ्युदयिकं चैतन्नैःश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥

---

१ शान्तिपर्वणि, अ० २४१, आदितः ।
२ मार्कण्डेयपुराणे, अ० १०, श्लो० २६–२८ ।
३ मनुस्मृतौ, १२।१०४, ६।७५, १२।८८–८९ ।

इह वामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
ज्ञानपूर्वं तु विद्वद्भिर्निवृत्तमुपदिश्यते ॥

याज्ञवल्क्यः[1], अपरार्के—

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते ॥

योगयाज्ञवल्क्यः[2]—

स्वकर्मणामनुष्ठानात् सम्यगात्मनिदर्शनात् ।
वेदान्तानां परिज्ञानाद्गृहस्थोऽपि विमुच्यते ॥

अन्येऽप्याश्रमिण एवंविधा मुच्यन्ते इत्यर्थः ।

परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्त्यपण्डिताः ॥

परिज्ञानं, कर्म परित्यज्य ज्ञानं केवलमित्यर्थः ॥ मार्कण्डेये—

प्रक्षालयामीति भवान् वत्सात्मानं तु मन्यते ।
विहिताकरणोद्भूतैः पापैः किं न विदह्यसे ॥
विहिताकरणात् पुंभिरत्यन्तं क्रियते तु यः ।
संयमो मुक्तये मोहात् प्रेत्य धर्मगतिप्रदः ॥
अविद्याप्युपकाराय विषवज्जायते नृणां ।
अनुष्ठिता ह्युपायेन दहत्यन्यायतोऽन्यथा ॥

पुलस्त्यः[4]—

ज्ञानकर्मसमायोगात् परं प्राप्नोति पूरुषः ।
पृथग्भावान्न सिध्यन्ति तदेतं सात्समाश्रयेत् ॥

ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्मादुभाभ्यां तु भवेञ्च सिद्धि-
र्न ह्येकपक्षो गरुडः प्रयाति ॥

---

१ याज्ञवल्क्यस्मृतौ, ३ । २०५ ।

२ योगयाज्ञवल्क्यवचनमिदमिति या० स्मृ०, ३ । ५७ इत्यत्र अपरार्कः ।

३ मार्कण्डेयपुराणे, अ० ९५, श्लोकाः २१, २०, २२ ।

४ इदं पुलस्त्यवचनमिति या० स्मृ०, ३ । ५७ इत्यत्र टीकायामपरार्कः ।

विष्णुधर्मोत्तरेषु[1]—

द्वे कर्मणी नरश्रेष्ठ ब्रह्मणा समुदीरिते ।
प्रवृत्तं च निवृत्तं च स्वर्गमुक्तिफले हि ते ॥
प्रवृत्तमपि मोक्षाय कर्म पार्थिव एव ते ।
कर्म स्वरूपतो दृष्टमनाकाङ्क्षिफलं हि यत् ॥

विष्णुपुराणे[2]—

एवं ज्ञानवतः कर्म कुर्वतोऽपि प्रजादिकम् ।
भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्यस्य वचनं यथा ॥
अनिवातो यथा वह्निर्ध्मायमानोऽपि नश्यति ।
तस्मादाश्रमिभिः सर्वैर्नित्यं यज्ञोपवीतिभिः ।
नित्यनैमित्तिकं कर्म करणीयमतन्द्रितैः ॥

हारीतः[3]—

यथाश्वा रथहीनास्तु रथा वाश्वैर्विना यथा ।
एवं तपोऽप्यविद्यस्य विद्या वाप्यतपस्विनः ॥

भारते मोक्षधर्मेषु शुकानुशासने (± १२।३२६।३४)—

कर्मणा मनसा वाचा स्वकर्मनिरतः सदा ।
नफलाकाङ्क्षिचित्तश्च स मोक्षमभिगच्छति ॥

इत्यादि । अनुगीतासु च (आश्वमेधिके, अ० २०, श्लो० ७)—

मोहमेव हि गच्छन्ति कर्मणा ज्ञानवर्जिताः ।
नैष्कर्म्यं न च लोकेऽस्मिन् मुहूर्तमुपपद्यते ॥

अथ शास्त्रनयेन ज्ञानकर्मसमुच्चयस्य निःश्रेयससाधनत्वाय प्रमाणोपपत्तिं दर्शयामः । तथा हि वैशेषिकेषु न्यायकन्दल्यां गुणपदार्थे धर्माधर्मनिर्वचने—किं ज्ञानमात्रान्मुक्तिः स्यादुत कर्मसमुच्चयात् । ज्ञानकर्मसमुच्चयादिति ब्रूमः । निवृत्तेतराभिलाषस्य काम्यकर्मभ्यो

---

१ विष्णुधर्मोत्तरीये वचनमिदमिति याज्ञवल्क्य(३।५७)टीकायामपरार्कः ।

२ विष्णुपुराणे वचनमिदमिति तत्रैवापरार्कः । तत्र द्वितीयश्लोकार्धः एवं वर्तते—तथा कर्मविहीनस्य ज्ञानाग्निः संप्रणश्यति ॥

३ हारीतस्मृतौ वचनमिदमिति तत्रैवापरार्कः ।

निवृत्तस्यापि नित्यनैमित्तिककर्माधिकारो न निवर्तते। तानि ब्राह्मणमुपनीतमधिकृत्य विहितानि । मुमुक्षुरपि ब्राह्मण एव, जातेरनुच्छेदात् । यदि, अधिकारे सति, अवश्यकरणीयान्यतिक्रमेत, प्रत्यवायोऽस्य प्रत्यहमुपचीयेत । तदुपचयाच्च बद्धो न मुच्येत । यदुक्तम्—

यानि कर्माणि काम्यानि प्रतिषिद्धानि यान्यपि ।
तानि बध्नन्त्यकुर्वंते नित्यनैमित्तिकान्यपि ॥

इति । काम्यं प्रतिषिद्धं च कुर्वते बध्नन्ति, नित्यनैमित्तिकानि तु अकुर्वन्तं बध्नन्ति ॥

ननु विहितस्याकरणमभावः । न चाभावो भावोत्पत्तिहेतुरित्यतो नास्मात् प्रत्यवायोत्पत्तिरिति चेन्न । अभावस्य हि स्वातन्त्र्येण हेतुत्वं नेष्यते, न तु भावोपसर्जनतया । न हि शरीरी संध्याकालेऽसंध्यादिकाले किंचिन्न करोति, शरीरधारणादीनामपि करणात् ।

कर्मणां प्रागभावो हि विहिताकरणादिषु ।
न चानर्थकरत्वेन वस्तुत्वान्नापनीयते ॥
स्वकाले यदकुर्वंस्तत् करोत्यन्यदचेतनः ।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ॥

इति । अभावेन केवलेनासौ न जन्यते । किं तु प्रतिषिद्धाचरणात् प्रत्यवायः ॥

ननु शरीरधारणादिकं च न क्वचन कंचन प्रति प्रतिषिद्धम् । तत् कुर्वन्नपि यदि संध्यायां यौगपद्यस्येति को दोषः, इति चेन्न । तत्काले विहितादवश्यकर्तव्यताविधेः संध्यावन्दनादेरन्यत् केवलशरीरधारणादेः करणं प्रतिषिद्धमिति । तदाचरतो भवत्येव प्रतिषिद्धाचरणनिमित्तः प्रत्यवायः ॥ अथोच्येत । दीर्घकालादेनैरन्तर्यसेवितभावनाहितविशदभावमात्मज्ञानमेव रागद्वेषौ मोहं च समूलंकषं कषतीति, तदयुक्तम् । यत्र ह्यभ्यासः प्रसीदति तत्र तत्र तत्त्वाग्रहो जातः संशयविपर्ययौ व्युदस्यति । न त्वस्य वस्त्वन्तनिर्वहणे सामर्थ्यं दृष्टपूर्वम् । यदि पुनरात्मज्ञानं कर्माणि निरुणद्धि, उपारूढफलभोगमपि सर्वं शारीरं मानसं च कर्म निरु-

न्ध्यात् । ततः सुदूरं गता जीवन्मुक्तिः । तत्त्वदर्शनानन्तरमेव विलीनाखिलकर्मणो देहपातापातात् ॥ अस्ति चायं परमार्थदृष्टिविरुद्धाखिलवेद्योऽपि चित्रलिखितमिवाभासमात्रेण सर्वं जगत् पश्यन् नैकत्राप्यारूढाभिनिवेशः प्रारब्धविशेषं कर्मफलमुपभुञ्जानः कुलालव्यापारविरमे चक्रभ्रान्तिवत् संस्कारवशादनुवर्तमानस्य देहस्य पातमुदीक्षमाणः । तथा श्रुतिश्च—

जीवन्नेव हि विद्वान् संप्रहर्षायासाभ्यां विमुच्यते ।

इति ॥ अलब्धवृत्तीनि कर्माणि तत्त्वज्ञानाद्विलीयन्ते इति चेन्न । तेषामपि कर्मत्वादारब्धफलवत् तत्त्वज्ञानेन विनाशाभावात् ॥

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।

इत्युपदेशोऽपि (मुण्डकोपनिषद्, २।२।८) यः, तस्यायमर्थः । ज्ञाने सत्यनागतानि कर्माणि न क्रियन्ते इति । न पुनरस्यायमर्थः, उत्पन्नानि ज्ञानेन विनाश्यन्ते इति ॥ तथा चागमान्तरम्—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।

इति[1] । यदि ज्ञानं कर्माणि न क्षिणोति, तर्ह्यनेकजन्मसंचितानां कुतः परिक्षय इति चेत्, भोगात् । कर्मभिश्चोदितानामनन्तानां कथमेकस्मिञ्जन्मनि परिक्षयः इति चेन्न, कालानियमात् । यथैव तावत् प्रतिजन्म कर्माणि चीयन्ते तथैव भोगात् क्षीयन्ते च । यानि त्वपरिक्षीणानि तान्यात्मज्ञेनादृष्टमसंचिन्वता क्रमेणोपभोगात् कर्मभिश्च निरस्यन्ते । उपात्तदुरितक्षयार्थं विहितकर्मणां विधिः ॥ यथोक्तम्—

कुर्वन्नात्मस्वरूपज्ञो भोगात् कर्मपरिक्षयम् ।
युगकोटिसहस्रेण कश्चिदेको विमुच्यते ॥

तदेवं विहितकर्ममकुर्वतः प्रत्यवायोत्पत्तेः तस्य बन्धहेतोरन्यतो विनाशासंभवात् प्रत्यवायविरोधार्थमुक्तिमिच्छता योगाभ्यासाविरोधेन यथाकालं भिक्षाभोजनादिवद्विहितानि कर्माण्यप्यनुष्ठेयानि यावदस्यात्मतत्त्वं न स्फुटीभवति । स्फुटीकृतात्मतत्त्वस्यापि तावत् कर्माणि यावच्छरीरयात्रा न निवर्तते । आत्मैकनिष्ठस्य त्वभ्यर्ण-

---

१ इदं वचनं सिद्धान्तमुक्तावल्यां १६४ कारिकाव्याख्याने उद्धृतम् ।

मोक्षस्य परिक्षीणप्रायकर्मणस्तानि भ्रश्यन्त एव, बहिःसंपत्तिविरहात्। परिणतसमाधिसामर्थ्यविशदीकृतमुपचितं वैराग्याहितपरिपाकपर्यन्तमुपपादितविषयाद्वैतमुन्मूलितनिखिलविपर्ययवासनमेकाग्रीकृतान्तःकरणमात्मज्ञानमेव केवलं संतानायते। न तदानीं बहिःसंवेदनं, बाह्येन्द्रियव्यापारोपरमात्। तत्र कः संभवः कर्मणाम्॥ तथा च श्रुतिः[1]—

न शृणोत्याहुरेके इति। न पश्यत्याहुरेक इत्यादि।

तथा चाकरणनिमित्तः प्रत्यवायो नास्ति। संध्योपस्थितेत्यादिकमजानतो ब्राह्मणोऽस्मीतिप्रतीतिरहितस्य कर्माधिकारपरिभ्रंशात्। यथोक्तम्

ब्राह्मणत्वादहंमानी कथं कर्माणि चोत्सृजेत्।

इति। न चास्योपरतसमस्तव्यापारस्य काष्ठवदवस्थितस्य प्राणिहिंसापि संभवति॥

यत् पुनरस्य दृष्टद्रष्टव्यस्य क्षीणक्षेतव्यस्य वशीकृतमनसो विषयावबोधस्मरणसंकल्पसुखदुःखादिरहितस्य ब्रह्मलग्नसमाधेरपि शरीरं कंचित्कालमनुवर्तते, तच्छरीरस्थितिमात्रहेतोरायुर्विपाकस्य कर्मग्रन्थेरनुच्छेदात्। यदा तु यावन्तं कालमायुर्विपाकेन कर्मणा शरीरं धारयितव्यं तावत्कालप्राप्तिरभूत्, तदा स्वकार्यकरणात् कर्मणः समुच्छेदे तत्कार्यस्य शरीरस्य निवृत्तिः। तन्निवृत्तौ तत्संपाद्यस्य तत्त्वज्ञानस्यापि विनाशादात्मकैवल्यमापद्यते। तत्रात्मतत्त्वज्ञानस्य विहितानां च कर्मणां बन्धहेतुकर्मप्रतिबन्धव्यापारादस्ति संभूयकारिता॥ शरीरादिविविक्तमात्मानं जानतश्च तदुपकारापकारावात्मन्यप्रतिसंदधानस्याहंकारममकारयोरुपरमे सति, उपकारिण्यपकारिणि रागद्वेषयोरभावादुदासीनस्याप्रवृत्तौ, अनागतयोः कुशलेतरकर्मणोरसंचयात्, संचितयोश्चोपभोगेन कर्मभिश्च परिक्षयात्, विहिताकरणनिमित्तस्य प्रत्यवायस्य विहितानुष्ठानेनैव प्रतिबन्धात्, क्षीणे कर्मणि चैहिकस्य देहस्य निवृत्तौ, कारणान्तराभावात् आमुष्मिकस्य देहस्य पुनरुत्पत्त्यभावे सति स्वरूपेणावस्थानमात्मनः सिद्धम्॥ यथोक्तम्—

---

१ प्रश्नोपनिषद्, ४।२।

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ॥
अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः ॥

इति । परैरप्ययमेव मार्गो गृहीतः—

कर्मणा सत्त्वसंशुद्धिर्ज्ञानेनात्मविनिर्णयः ।
भवेद्विमुक्तिरभ्यासात् तयोरेव समुच्चयात् ॥

इति ॥ इत्येष सर्वगीताप्रकरणप्राणभूतः परमार्थविचारः कैश्चन प्रमाणज्ञैः श्लोकैरपि संगृहीतः—

अतो विवेकिनः पुंसो विषये दोषदर्शनात् ।
विरक्तस्य निषिद्धादित्यागे नित्यस्य सेवनात् ॥
निवर्तकस्य तस्योदयेन हि समुच्चितात् ।
ज्ञानाच्छरीरबुध्यादिनवात्मगुणसंक्षये ।
दग्धेन्धनादिवत् पुंसोऽवस्थानं मोक्ष उत्तमः ॥

तथा चाक्षपादानामपि न्यायभूषणे तृतीये परिच्छेदे, परमात्मतत्त्वज्ञानं च तदुपासनाङ्गत्वेनापवर्गसाधनमित्येतद्वाक्यविचारे— तस्य परमेश्वरस्योपासनमाराधनं तस्याङ्गत्वेनोपायत्वेन येन केनचिदुपायेन क्लेशाः रागद्वेषमोहाः क्षीयन्ते महेश्वरविषयं चित्तैकाग्र्यं च प्राप्यते स उपायोऽनुष्ठीयमानः—

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ।

क्लेशतनूकरणार्थः समाधिलाभार्थश्च । ईति पातञ्जलसूत्रान्वीक्षया क्रियायोग इति विचारे कर्मणोऽङ्गित्वेन ज्ञानस्य च कर्माङ्गत्वेन स्पष्ट एव समुच्चयपक्षः ॥

न्यायमुक्तावलौ च सांसारिकसुखानुद्देशेनानुष्ठीयमानैः परमेश्वरभक्तियोगाङ्गादिसाधनैः कर्मभिः समुत्पादितो धर्मस्तत्त्वज्ञानेन शमसुखमुत्पादयन् निःश्रेयसाङ्गमित्यत्राप्येतदेव तात्पर्यम् ॥

सांख्यानामपि—

सम्यग्ज्ञानाधिगमात्

१ पातञ्जलयोगसूत्राणि, पा० २, सू० १ ।

इत्यस्यां कारिकायां शरीरस्थितिपर्यन्तं सर्वाणि शारीरिकाणि मानसिकानि च धर्मकार्याणि दग्धप्रायाणि तिष्ठन्तीति व्याख्यायां स्फुट एव कैवल्ये ज्ञानकर्मसमुच्चय इति ॥

मीमांसकैश्च—सत्यानृते सुखदुःखानि वेदानिमं लोकममुं च परित्यज्यात्मानमेव बुध्येत्—इत्येतद्वाक्यविचारे, आत्मन्यवबुद्धे चेदात्मज्ञानमात्रादेव मुक्तिः, तर्हि इहैव शरीरे म्रियमाणे किमपि दुःखं नोपलभ्येत । दृष्टं च ज्ञानिनामपि शीतोष्णादि सुखदुःखम् ॥ समुच्चयपक्षे तु यावज्जीवमनुष्ठितेषु कर्मसु मुक्तिरिति न जीवतो मुक्तिबन्धः । तदुक्तं मनुना ( अ० ६, श्लो० ४५ )—

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निवेशं भृतको यथा ॥

तथा च विष्णुपुराणे षष्ठेंऽशे खाण्डिक्यकेशिध्वजोपाख्यानं ज्ञानकर्मसमुच्चयेनापवर्गप्रतिपादकं प्रसिद्धं तत्रैवावधार्यम् । तथात्रोपदेशश्लोकः—

अहमविद्यया मृत्युं तीर्तुकामः करोमि वै ।
राज्ययागांश्च विविधान् भोगैः कर्मक्षयं तथा ॥

इति[२] । तथा च वाराहे आदिवृत्तान्ते (व० पु०, अ० ५, श्लो० ४)—

कर्मिणा प्राप्यते मोक्ष उताहो ज्ञानिना मुने ।

इत्यश्वशिरसो राज्ञः प्रश्ने ।

बृहस्पते ज्ञानिना किं कर्मिणा प्राप्यतेऽथवा ।
मोक्ष एतत् समाचक्ष्व.........॥

इति रैभ्यप्रश्नः (तत्रैव, श्लो० १६) ।

बृहस्पतिः[३] —

यत्किञ्चित् कुरुते कर्म पुरुषः साध्वसाधु वा ।
सर्वं नारायणे न्यस्य कुर्वन्नेवं न लिप्यते ॥
श्रूयते च द्विजश्रेष्ठ संवादो विप्रलुब्धयोरिति ॥

---

१ सांख्यकारिका, ६७ । २ विष्णुपुराणे, अंश ६, अ० ७, श्लो० ९ ।
३ वराहपुराणे, अ० ५, श्लो० १७ ।

  

निष्ठुरकव्याधस्यात्रेयस्य ब्राह्मणस्य च संवादे ज्ञानकर्मसमुच्चयेन श्रेयःप्राप्तिरिति ॥ तथा च भारते मोक्षधर्मेषु गोकापिलीये ( शान्तिपर्वणि, अ० २६८–२७० ) स्पष्टं तत्र द्रष्टव्यं प्रश्नोत्तरम् । तथा च सुलभाजनकसंवादे ( शान्तिपर्वणि, अ० ३२०, श्लो० ३९–४० )—

ज्ञानमेकं वदन्त्येके मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः ॥
प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलं ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥

इति । विवृतं चैतद्विवरणे ॥ तथा च लक्ष्मीवासुदेवकल्पे वैष्णवे तन्त्रे द्वितीये विलासे—

तथापि ज्ञानसद्भावं क्रियोपेतं शृणुष्व मे ।
स्थूलं सूक्ष्मं परं चैव सकलं निष्कलात्मकम् ॥

इत्यादि लक्ष्मीं प्रति भगवदुपदेशो विवृतो ज्ञानकर्मसमुच्चयप्रतिपादको गुरुवरैः लघुपञ्जिकायां कल्पलताभिधानायाम्—ज्ञानस्वरूपोद्देशस्य समुचितमोक्षवितरणे सामर्थ्याभावात् क्रियोपेतं सदाचारेण युक्तं ज्ञानक्रियासमुच्चयरूपमिदं शास्त्रमवधारयेत्यर्थः। इत्यादि सर्वमस्मिन् विलासे तेषु तेषु वाक्येषु निर्णीतमिति तत् तत एवावधार्यम् ॥

तदेवं मोक्षसाधनान्यनुष्ठेयान्यकरणे प्रत्यवायकानि नित्यानि कर्माणि पञ्चयज्ञादीनि, नैमित्तिकानि च पितृक्षयाहोपरागपुत्रेष्ट्यादीनि श्रुतिस्मृतिप्रसिद्धान्येव किमेतद्विस्तरोद्देशेन ॥ अथ (श्वे० उ०, ३।८)—

तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते ।

स्वरूपस्य, इत्याकाङ्क्षायाम्—

[1]द्वे ब्रह्मणी वेदितव्ये परमपरं च ।

इतिश्रुत्यर्थसंबन्धेन परमात्मवेदनादपरात्मनः श्रेयःप्राप्तिरिति प्राप्ते, सोऽपरात्मा, क्षेत्रज्ञो जीवात्मा पुरुषो देहीति संज्ञया प्रसिद्धः, परमात्मनो भिन्न उताभिन्न इति संशये, अयोगोलकाग्निविस्फुलिङ्गवदंशांशिकल्पनया भिन्नश्चाभिन्नश्चेति । तत्रोपाधिवशाद्भिन्नः, स्वभाव-

---

१ ± मैत्र्युपनिषद्, ६।२२, तथा ब्रह्मबिन्दु, १।१७।

तत्त्वभिन्नः ॥ तथा च श्रुतिः (बृहदारण्यकोपनिषद्, २।१।२०)—

यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि व्युच्चरन्ति ।

प्रादुर्भवन्ति । यथाग्नित्वसामान्येन विस्फुलिङ्गाग्नेरयोगोलकाग्नेश्चान्योन्यमभेदः, तथात्मत्वसामान्येन परस्परमभेदेऽपि, अन्तःकरणोपहितनानाशरीरव्यक्तिभेदोपाधिवशादात्मनो निरुपाधेर्जीवात्मनां च अन्योन्यं भेदः ॥ तथा चायमेवाभिप्रायः ( श्वे० उ०, ४।६ )—

तौ द्वौ सुपर्णौ सयुजौ सखायौ
समानं वृक्षं परिषस्वजाते ।
तयोरेकः पिप्पलं स्वादु अत्ति
अन्योऽनश्नन्नभिचाकशीति ॥

परमात्मा त्वेक एव न तु नाना । तथा च श्रुतिः (श्वे० उ०, ३।२)—

एको रुद्रो न द्वितीयोऽवतस्थे
य इमांल्लोकानीशत ईशनीभिः[1] ॥

इति । तथा (छा० उ०, ६।१; बृ० उ०, ४।४।१९)—

एकमेवाद्वितीयं ब्रह्म । नेह नानास्ति किं चन ।

इत्यादि । तथा चास्य परमात्मनो गुणाः श्रुतावेव (श्वे० उ०, ३।३)—

यो विश्वचक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रै-
र्द्यावाभूमी जनयन् देव एकः ॥

इति । यो विश्वचक्षुरिति सर्वज्ञत्वं समर्थितम्, विश्वतोमुख इति सर्ववक्तृत्वम्, विश्वतोबाहुरिति सर्वकर्तृत्वम्, विश्वतस्पादिति सर्वव्यापकत्वम्, सं बाहुभ्यामिति धर्माधर्मयोः प्रधानतया कारणमित्यभिधीयते । सं पतत्रैरिति, पतन्ति गच्छन्ति विकारमिति पतत्रशब्देन महदादयः परमाण्वादयो वा । सं धमति सं जनयन्निति व्यवहितेन समा संबन्धः ॥ तथायमर्थः । महदादिभिः द्यावाभूमी जनयन् धर्माधर्माभ्यां संधमति संयोजयतीति । द्यावेत्यूर्ध्वसप्त-

---

१ 'ईशनीभिः' इति प्रचलितः पाठः ।

लोकोपलक्षणम् । भूमीत्यधस्तात् । एक इतीश्वरभेदापाकरणाय ॥ तदेवंभूतमधिकृत्य श्रूयते (± बृ॰ उ॰, ४।३।२३)—

न हि द्रष्टृदृश्यविपर्ययो विद्यते ।

इति ।

एकमेवाद्वितीयम् ।

इति (छा॰ उ॰, ६।२।१)।

पश्यत्यचक्षुः स शृणोत्यकर्णः ।

इति (श्वे॰ उ॰, ३।१९)।

यज्ञेन यज्ञमयजन्त देवाः ।

इति (ऋ॰ सं॰, १०।९०।१६)।

यज्ञो वै विष्णुः ।

इत्यादि च ॥ सर्वथा यत्र क्वचन वेदभागे परमेश्वरोऽनुगीयते—कर्तृत्वेन पुरुषसूक्तेषु, शब्दब्रह्मत्वेन[2] धर्माधर्मादिप्रपञ्चं पुरस्कृत्य निष्प्रपञ्चतयोपनिषत्सु, यज्ञपुरुषत्वेन मन्त्रविधिषु, देहाविर्भावैर्ब्राह्मणेषु, उपास्यत्वेन तु शतरुद्रियादौ सर्वत्र च । तदेवं जीवात्मपरमात्मनोरात्मत्वसामान्यात् सर्वे गुणाः श्रुतिसिद्धाः साधारणा एव ॥

तथा चात्र—

निःसरन्ति यथा लोहपिण्डात् तप्तात् स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥

इति (या॰ स्मृ॰, अ॰ ३, श्लो॰ ६७)। इत्थं याज्ञवल्क्यादिप्रणीता जीवेश्वरयोर्भेदाभेदाभिधायिन्यः स्मृतयः प्रसिद्धा एव भूयस्यः॥

तथा चात्र शास्त्रीयोपपत्तिरपि तत्र तत्र सविस्तरा । श्रोतृप्रवृत्त्यर्थं तु सुगमं सारमात्रं दृश्यते ॥ अक्षपादेषु आगमपरिच्छेदे—परमेश्वरो नित्यव्यापकाचलस्वभावोऽपि शरीरेन्द्रियादिदशभिः प्रमेयैर्योगाज्जायते म्रियते प्रदेशस्थः प्रवर्तते निवर्तते । रागी द्वेष्टा मूढो दुःखी सुखीत्येवं निर्निकृष्टरूपेणावभाति । यदा तु प्रोक्तदोषाणि

---

१ ऐ॰ ब्रा॰, १।१५; शतपथब्रा॰, १३।१।८।८; यजुर्वेद, २२।२०।

२ मातृकायां 'शब्दब्राह्मणत्वेन' इति पाठः ।

शरीरादीनि दुःखान्तानि दुःखभावनयैव संत्यज्य आत्मज्ञानैकरति-
४३८ र्भवति, तदा स्वेनैव नित्यत्वादिरूपेण प्रकाशमानोऽपवर्गं प्राप्य
स्वात्मन्येव तिष्ठतीति प्रसिद्धम् ॥ अत्रैव आत्मज्ञानान्मुक्तिरिति
सिद्धे, स आत्मा द्विविधः परश्चापरश्चेति । तत्र भगवान् महेश्वरः
४४१ परमात्मा परः । तस्य लक्षणं परमैश्वर्यविशिष्टत्वम्, संसार-
धर्मैं रागद्वेषमोहादिभिरीषदप्यस्पृष्टत्वं सर्वज्ञत्वसकलजगद्विधातृत्वं
चेति । एवंलक्षणोऽसौ कथं ज्ञातव्य इत्याह, आगमादनुमानाच्च ॥

४४४ तत्र तावदनुमानमुच्यते । विवादाध्यासितमुपलब्धिसत्करणम्,
अभूत्वा भावित्वात्, वस्त्रादिवत् इति । विवादास्पदं क्षित्यादिकं
कार्यमुपादानोपकरणप्रयोगाभिज्ञेन कृ.........[1]

---

१ अतः परं ग्रन्थपातः ।

# [ अथ श्रीमद्भगवद्गीतायां

## प्रथमोऽध्यायः[1] ॥

धृतराष्ट्र उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे सर्वक्षत्रसं[2]मागमे ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

संजय उवाच ।

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥
पश्यैतां[3] पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

---

१ उपलब्धमातृकायामुपोद्घातस्य ४४६पङ्क्तिमारभ्य द्वितीयाध्यायस्य षष्ठश्लोकस्य चरमपादं यावद्ग्रन्थपातः । टीकाकर्त्रा गीतायाः काश्मीरपाठस्यैव प्रायः स्वीकारात् तत्पाठानुसारेण मूलपरिपूर्तयेऽत्र समग्रः प्रथमोऽध्यायो द्वितीयाध्यायस्य च पादोनं श्लोकषट्कं काश्मीरमातृकानुसारेण संशोध्य विनियोजितम् । संशोधने यावदुपलब्धि भास्कररामकव्यभिनवगुप्तानां टीकास्तथा गोण्डलस्थं कलकत्तास्थं च शारदालिप्या लिखितं प्राचीनं पुस्तकद्वयमिति पुस्तकपञ्चकं प्रमाणीकृतम् ।

२ 'समवेता युयुत्सवः' इति प्रचलितपाठस्थानेऽयं काश्मीरपाठः कलकत्तामातृकावर्जं सर्वत्र स्वीकृतः ।

३ 'पश्य तां' इति गोण्डलमातृकापाठः ।

अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम ।
नायका[1] मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥[2]
भवान् भीष्मश्च कर्णश्च कृपः शल्यो जयद्रथः[3] ।
अश्वत्थामा विकर्णश्च सौमदत्तिश्च वीर्यवान्[4] ॥ ८ ॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणा नानायुद्धविशारदाः[5] ॥ ९ ॥
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्[6] ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्[6] ॥ १० ॥
अयनेषु च[7] सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥
तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥

---

१ 'नायकान्' इति भास्कररामकविपुरस्कृतः पाठो गोण्डलमातृकायामपि दृश्यते ।

२ सप्तमश्लोकानन्तरमभिनवगुप्तपठितः श्लोकार्धो यथा—

'सैन्ये महति ये सर्वे नेतारः शूरसंमताः' ।

३ द्वितीयचरणस्य प्रचलितपाठो यथा—'कृपश्च समितिंजयः' ।

४ चतुर्थचरणस्य प्रचलितपाठो यथा—'सौमदत्तिर्जयद्रथः' ।

५ अत्रत्यः प्रचलितपाठो यथा—'सर्वे युद्धविशारदाः' ।

६ द्वितीयचतुर्थपादौ व्यत्यस्याभिनवगुप्तेन पठितौ व्याख्यातौ च । भास्करपाठोऽपि तथैवेति ति. रा. चिन्तामणिः ।

७ 'च' स्थाने 'तु' इति भास्कररामकविपाठो गोण्डलकलकत्तामातृकापाठश्च ।

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
पाञ्चालंश्च महेष्वासो द्रौपदेयाश्च पञ्च ये।[1]
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्[2] ॥ १९ ॥
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते।[3]
उभयोः[4] सेनयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान्।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः।
धार्तराष्ट्रस्य[5] दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥[6]
एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
उभयोः[4] सेनयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

---

१ प्रथमार्धस्य प्रचलितपाठस्तु—'द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते'।

२ 'व्यनुनादयत्' इति रामकविपाठः, 'ऽभ्यनुनादयन्' इति गोण्डलमातृकायाम्।

३ अत ऊर्ध्वं 'अर्जुन उवाच' इति कलकत्तामातृकायां न पठितम्।

४ 'सेनयोरुभयोर्मध्ये' इति प्रचलितपाठः।

५ 'धृतराष्ट्रस्य' इति गोण्डलमातृकापाठः।

६ अत ऊर्ध्वं 'संजय उवाच' इति प्रायोऽनावश्यकः पाठः।

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥
तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥२६॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ॥ २७ ॥
कृपया परयाविष्टः सीद[1]मानोऽब्रवीदिदम् ।[2]
दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समवस्थितान्[3] ॥ २८ ॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥
स्रंसते[4] गाण्डिवं हस्तात् त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥
न काङ्क्षे विजयं कृष्ण न च[5] राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त एवेमे स्थिता योद्धुं प्राणांस्त्यक्त्वा सुदुस्त्यजान्[6] ॥ ३३ ॥

---

१ 'विषीदन्निदमब्रवीत्' इति प्रचलितपाठः ।

२ अत ऊर्ध्वं 'अर्जुन उवाच' इति प्रायोऽनावश्यकः पाठः ।

३ प्रचलितपाठस्तु—'दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्' । इति ।

४ भास्कररामकविटीकयोः कलकत्तामातृकायां चायं पाठः । अन्यत्र तु 'गाण्डीवं स्रंसते हस्तात्' इति पाठः ।

५ 'न राज्यं न सुखानि च' इति रामकविपाठस्तथा गोण्डलमातृकायामपि ।

६ अभिनवगुप्तपाठस्तु प्रचलितपाठानुसारी यथा—
'त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च' ।

आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः स्यालाः संबन्धिनस्तथा ॥ ३४ ॥
एतान् न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किमु[1] महीकृते ॥ ३५ ॥
निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६ ॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्[2] ।
स्वजनं[3] हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्[4]जनार्दन ॥ ३९ ॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥
अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः[5] ॥ ४३ ॥

---

१ भास्करपाठः प्रचलितपाठानुसारी, 'किमु' इत्यस्य स्थाने 'किं नु' इति ।
२ 'सबान्धवान्' इति रामकविपाठः ।
३ 'स्वजनान्' इति गोण्डलमातृकापाठः ।
४ 'संपश्यद्भिः' इति गोण्डलमातृकापाठः ।
५ भास्करपाठस्तु—'उत्साद्यते जातिधर्मः कुलधर्मश्च शाश्वतः'। इति ।

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥
अहो बत महत् पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः[1] ॥ ४५ ॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥[2]
एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत्[3] ।
उत्सृज्य[4] सशरं चापं शोकसंविग्नमानसः[3] ॥ ४७ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
प्रथमोऽध्यायः ॥ १ ॥

---

१ 'स्वजनान् हन्तुमुद्यताः' इति गोण्डलमातृकापाठः ।
२ अत ऊर्ध्वं 'संजय उवाच' इति प्रायोऽनावश्यकः पाठः ।
३ गोण्डलमातृकायां द्वितीयचतुर्थचरणौ स्थानव्यत्यासेन पठितौ ।
४ 'विसृज्य' इति तु प्रचलित पाठः ।
५ इयं पुष्पिका तु न सर्वत्र संपूर्णत्वेन मातृकायां लिखिता ।

## ॥ द्वितीयोऽध्यायः ॥

संजय उवाच ।

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
सीदमानमिदं[1] वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच ।

कुतस्त्वा[2] कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
मा क्लैब्यं गच्छ कौन्तेय[3] नैतत् त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

अर्जुन उवाच ।

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥
गुरूनहत्वा हि महानुभावा-
ञ्छ्रेयो[4]श्चर्तुं भैक्ष्यं[5]मपीह लोके ।
न[6] त्वर्थकामस्तु गुरून् निहत्य
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

---

१ प्रचलितपाठस्तु 'विषीदन्तमिदं' इति ।

२ भास्कररामकविपाठस्तु 'कुतस्त्वां' इति ।

३ प्रथमपादस्य प्रचलितपाठस्तु 'क्लैब्यं मा स्म गमः पार्थ' इति ।

४ प्रचलितपाठः 'श्रेयो भोक्तुं' इति ।

५ 'भैक्षम्' इति गोण्डलमातृकावर्जं प्रायः काश्मीरपाठः । 'भैक्ष्यम्' इति पाठस्तु २।१२श्लोकस्यानन्दवर्धिनीटीकायामुद्धृतो दृश्यते ।

६ तृतीयपादस्य प्रचलितपाठस्त्वेवं वर्तते—
'हत्वार्थकामांस्तु गुरूनिहैव' ।

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम- ][1]
स्ते नः स्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

न चैतज्जयपराजययोर्दैवाधीनतया जानीमः, कतरद्बलं नोऽस्माकं
धार्तराष्ट्राणां च मध्याद्बलवत्तरं स्यादिति । यद्वा वयं तान् जयेम वा
३ तेऽस्मान् जयेयुरिति । यानेव गुरुप्रभृतीन् व्यापाद्य वयं न जिजी-
विषामः, कुलक्षयदोषाज्जीवितुं नेच्छामः । तेऽमी धार्तराष्ट्राः,
धृतराष्ट्रस्य सेनायां समवेता भीष्मादयो धृतराष्ट्रपुत्रा दुर्योधना-
६ दयोऽपि । अत्र प्रमुखे स्थिताः ॥ ६ ॥

एवमनुशोच्य सङ्कटपातेन किंकर्तव्यतामूढो भगवन्तं विज्ञाप-
यति—

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वा धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

३ कार्पण्येन बन्धुस्नेहजनितेन चित्तवैक्लव्येनोपहतः स्वभावो धैर्योत्साह-
विवेकादिर्यस्येदृशोऽत एव धर्मे शास्त्रोदितायामितिकर्तव्यतायां संश-
यितचित्तस्त्वां शास्तारं पृच्छामि । अत्र मम यत् किंचित् श्रेयः
६ प्रशस्यतरं तन्निश्चितं ब्रूहि यतस्तवाहं शिष्यः शासनीयः । अतो मां
प्रपन्नमुपसन्नं शिष्यं शरणागतं शिक्षय ॥ ७ ॥

न हि प्रपश्यामि ममापनुद्या-
द्यः[2] शोकमुच्छोषणमिन्द्रियाणाम् ।

---

१ एतदवधिर्ग्रन्थपातः । अतः परं सटीकं मूलं मातृकानुसारेण, प्रमाद-
स्खलितमात्रं संशोध्य, प्रकाश्यते ।

२ 'यः' इतिस्थाने 'यत्' इति प्रचलितपाठानुसारी पाठः कलकत्ता-
मातृकायाम् ।

**अवाप्य भूमावसपत्नमृद्धं**
**राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

भूमौ निःसपत्नं च समृद्धं च राज्यं प्राप्यापि, इन्द्रियाणां बाह्याभ्यन्तराणामुच्छोषणं संतापकं शोकं योऽपनुद्यान्निरसेत् तं त्वां विना न पश्यामीति त्वामहं प्रपन्नः ॥ ८ ॥

एवं पार्थप्रतिज्ञातामुक्तिमुपसंहरन् धृतराष्ट्रं संजय आह—

संजय उवाच।

**एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप[1]।**
**न योत्स्यामीति[2] गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥**

एवं 'कथं भीष्ममहम् (२।४)' इत्यादि युद्धे स्वस्यानौचित्यं हृषीकेशमुक्त्वा ततोऽनन्तरं 'न योत्स्य' इति गोविन्दं, गां वाचं विन्दतीति सर्वज्ञं सर्वाभिप्रायज्ञम्, उक्त्वा तूष्णीं बभूव, युद्धव्यापाराद्विरामेत्यर्थः ॥ ९ ॥

**तमुवाच हृषीकेशः प्रहसन्निव भारत।**
**सेनयोरुभयोर्मध्ये सीदमानमिदं[3] वचः ॥ १० ॥**

तं पार्थमुभयोः सेनयोर्मध्ये प्रोक्तप्रकारेण सीदमानं शोकाभिभूतं युद्धं प्रति त्यक्तोत्साहं प्रहसन्निव विकृतचेष्टादर्शनादुपहसन्निव हृषीकाणामिन्द्रियाणामीशः प्रेरयिता परमात्मस्वरूपश्चतुरात्मा भगवान्। देहाहंभावनाविर्भूतमिथ्याज्ञानस्यास्य 'न योत्स्यामीति' कृतसंकल्पस्य तत्त्वज्ञानोपदेशं विना मिथ्याज्ञाननिवृत्तेरसंभवः, इति तत्त्वोपदेशपूर्वं स्वकर्मणि प्रवर्तयिषुर्देहदेहिनोः संयोगवियोगस्वरूपमुद्दिशन्नुवाचेत्यर्थः ॥ १० ॥

---

१ 'परंतपः' इति प्रचलितपाठानुसारी कलकत्तामातृकापाठः।

२ 'योत्स्य इति' प्रचलितपाठानुसारी गोण्डलकलकत्तामातृकयोः पाठः। टीकाकृता स एव टीकायामुद्धृत इवेति भाति।

३ कलकत्तामातृकापाठः 'विषीदन्तम्' इति प्रचलितपाठानुसारी।

श्रीभगवानुवाच ।

त्वं मानुष्येणोपहतान्तरात्मा
विषादमोहाभिभवाद्विसंज्ञः ।
कृपागृहीतः समवेक्ष्य बन्धू-
नभिप्रपन्नान् मुखमन्तकस्य ॥ ११ ॥[1]

मानुष्येण मनुष्यजातिसुलभेन रजोगुणस्वभावेन संशयविपर्यय-ज्ञानप्रायेण चित्तचापलेनोपहतो मलिनीकृतोऽन्तरात्मान्तःकरणं यस्य ईदृशः सन् । अन्तकस्य मुखमभिप्रपन्नान् । अन्तं देहदेहिनोः संयोगस्य पर्यवसानं कथयति, 'कै गै शब्देन गणयति' इति[2] । कालस्वरूपस्ये-श्वरस्य मुखं प्राप्तान् मृत्युग्रस्तान् बन्धून् समवेक्ष्य कृपागृहीतः, युद्धे समेता बन्धवो हन्यन्ते, युद्धत्यागात् तु रक्षिताः स्युरिति ममता-निबन्धनेन कारुण्येनैव पिशाचेन गृहीत आविष्टः । अत एवैते म्रियन्त इति विषादस्य शोकस्याभिभवेन, तथा त्यक्ते तु युद्धे एते रक्षिताः स्युरिति मोहस्य मिथ्याज्ञानस्य चाभिभवात्, विगतसम्यग्ज्ञानोऽसी-त्यर्थः ॥ ११ ॥

सम्यग्ज्ञानाभावमेवाह ।

अशोच्यानन्वशोचस्[3]त्वं प्राज्ञवन्[4]नाभिभाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ १२ ॥

भीष्मादीनशोच्यान्, वक्ष्यमाणनीत्या शोचनानर्हान्, त्वमन्वशोचः

---

१ अयमधिकः श्लोकः काश्मीरपाठे । तत्र पाठान्तराणि— 'मानुषेण' इति भास्करपाठः, 'समवीक्ष्य' इति क्वचित् प्रामादिकः ।

२ पाणिनीयधातुपाठस्तु 'कै गै शब्दे' इति ( १।९६४–९६५ ) ।

३ 'अन्वशोचः' इति प्रचलितपाठस्थाने 'अनुशोचन्' इति भास्कर-रामकव्यभिनवगुप्तानां तथा गोण्डलमातृकायाः पाठः ।

४ 'प्रज्ञावादांश्च' इति प्रचलितपाठो भास्करेण स्वीकृतः, कलकत्तामातृ-कायां च विद्यते ।

शोचितवानसि । च, पुनः 'पापमेवाश्रयेदस्मात्[1]' इत्यादि, 'श्रेयश्चर्तुं भैक्ष्य[2]मपि' इत्यादि च, प्राज्ञवद्बुद्धिमानिव न भाषसे । पण्डिताः प्राज्ञा हि गतासून् मृतान् अगतासूंश्च जीवतः नानुशोचन्ति, जन्ममरणयोरावश्यकत्वात् । अथ चात्रोद्देशपर्वणि स्थूलप्रकृतिपुरुषसमुदायात्मनोर्देहदेहिनोरुद्देश्ययोः वक्ष्यमाणं भेदमाश्रित्य व्याख्याने आत्मानात्मतत्त्वज्ञानोपदेश आसूत्रितः ॥ तथाहि । अशोच्यान् नित्यत्वेनात्मना विनाशाभावदर्शनादशोचनीयान् शोचितवानसि । पण्डिता नित्यानित्यत्वविचारकाः गतासूनगतासूंश्च तेषु तेषु शरीरेष्वेव स्थितानवस्थितप्राणत्वात् जीवन्मृतव्यपदेशभाजो नित्यान् जीवात्मनो नानुशोचन्तीति ॥ १२ ॥

जीवानामविनाशित्वमेव लक्षयति—

न ह्येवा[3]हं जातु नासं न त्वं नामी[4] जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः[5] परम् ॥ १३ ॥

हि निश्चये । अहमिदानीं वर्तमानो जातु कदाचिन्न नासम्, अपि त्वहं प्राक् शरीरे स्थित एवेदानीमपि वर्ते । एवं त्वमपि जातु न नासीरपि त्वासीरेव । प्राग्भूत इदानीमपि वर्तसे । च पुनः, अतः परमस्माद्देहादनन्तरं न [न] भविष्यामः, अपि तु भाविष्याम एव शरीरान्तरे । इति त्रिष्वपि कालेषु सत्तया नित्यत्वादेषामविनाशित्वमित्यर्थः ॥ १३ ॥

---

१ 'अस्मान्' इति सर्वत्र । प्रायो लेखकप्रमादादत्र 'अस्मात्' इति पाठः पाठभेदत्वेन स्वीकर्तव्यो भवति ।

२ 'भैक्षम्' इति प्रायः काश्मीरपाठः ।

३ प्रचलितपाठस्तु 'त्वेवाहं' इति । स एव भास्करेण स्वीकृतः कलकत्तामातृकायां च दृश्यते ।

४ प्रचलितपाठस्तु 'नेमे' इति । स एव भास्करेण स्वीकृतः कलकत्तामातृकायां च दृश्यते ।

५ 'इतः परम्' इति पाठो रामकविनाभिनवगुप्तेन च स्वीकृतः । गोण्डलमातृकायां च दृश्यते ।

तदेवं सामान्येनोक्त्वा विशेषेण नित्यत्वे लोकप्रसिद्धं दृष्टान्तमाह—

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १४ ॥

अस्मिन् वर्तमाने देहे एतद्देहविषया बाल्याद्यवस्था नश्यन्त्यः, देहिनः सर्वास्ववस्थास्वेकरूपस्य नित्यस्याविनाशिनो यथा विनाशशङ्काशोककारणं न भवन्ति, तथैवास्माद्देहाद्देहान्तरप्राप्तिरपीति धीरो बुद्धिमांस्तत्र न मुह्यति, अनात्मनि देहे आत्मविषयं शोकं न करोतीत्यर्थः ॥ १४ ॥

यद्येवं कथं देहस्य सुखदुःखादिसंयोग इत्याह—

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १५ ॥

मीयन्ते आभिर्विषया इति मात्रा इन्द्रियवृत्तयः, तासां स्पर्शाः, देहसमवायेन विषयैः संयोगाः, शीतोष्णसुखदुःखदाः देहिनः शीतत्वेन सुखदाः उष्णत्वेन दुःखदाः सन्तः, आगच्छन्त्यपयान्ति चेत्यागमापायिनः नियमहीनाः अनित्याः सन्ति । नियमाभावो ह्येषामेकदा सुखजनकस्यैव शीतादेर्दुःखदायित्वात् । शीतोष्णग्रहणमत्रोपलक्षणम् । तेन यत्किंचिदाध्यात्मिकं सुखं दुःखं चेति ज्ञेयम् । अत एवानित्यत्वान्निवारयितुं शक्या इत्याह—तांस्तितिक्षस्व, अज्ञानात् कृपयोत्पन्नमपि दुःखं तावत् सहस्वेत्यर्थः ॥ १५ ॥

तत्सहनप्रकारमेवाह—

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं[1] धीरं सोऽमृतत्वाय कल्पते ॥ १६ ॥

अमृतत्वाय मोक्षाय कल्पते समर्थः स्यादित्यर्थः ॥ १६ ॥

एतदेव प्रपञ्चयति ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १७ ॥

---

१ मातृकायां 'समसुखदुःखं' इति च्छन्दोहीनः पाठः प्रायो लेखकप्रमादजन्यः ।

असतः आगमापायिनः सुखदुःखादेः, तद्भोगायतनस्य च भावः सत्ता स्थैर्यं नास्ति। सतः तदेकरूपस्यात्मनः नित्यस्याभावो विनाशो नास्ति। उभयोरप्यनयोः सदसतोरन्तो मर्यादा व्यवस्था तत्त्वदर्शिभिः सदसतोर्याथात्म्यवेदिभिः दृष्टो निश्चितः। अन्तशब्दो मर्यादावाची ग्रामान्त इतिवत् ॥ १७ ॥

अविनाशविनाशशब्दाभ्यां सदसतोर्लक्षणमाह—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥ १८ ॥

येन जीवात्मना सर्वमिदं भूतान्तःकरणसमयरूपं शरीरं ततं ज्ञातृत्वकर्तृत्वादिभिर्व्याप्तं तदविनाशि जानीहि। व्ययो वस्तुनो देशकालादिना व्यवच्छेदः, अवयवविभागस्तेन रहितस्यास्य जीवात्मनः कश्चिदीश्वरो विनाशं कर्तुं नार्हति। सावयवस्यैवावयवविभागेन विनाशो भवति। न निरवयवस्येति ॥ १८ ॥

अविनाशिनमुक्त्वा विनाशं लक्षयति—

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
विनाशिनो प्रमेयस्य तस्माद्युध्यस्व भारत ॥ १९ ॥

अप्रमेयस्य देशकालादिभिरनवच्छिन्नस्य अत एव नित्यस्य शरीरिणः शरीरसमवेतस्यात्मनः इमे पुरःस्थिता भीष्मादिदेहाः अन्तवन्तः देशकालादिभिरवयवविभागदर्शनादन्तवन्तः विनश्वराः दृष्टाः। तस्माद्भीष्मादिजीवात्मनामविनाशित्वात् 'युध्यस्व' इत्यर्जुनं स्वधर्मान्निवृत्तं पौनःपुन्येन नियोजयति भगवान् ॥ १९ ॥

यत्तु मन्यसे एतेषां हननेन नरकपातः स्यादिति तदपि मृषेत्याह—

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ २० ॥

---

१ 'अनाशिनो' इति प्रचलितपाठो गोण्डलकलकत्तामातृकयोर्विद्यते। काश्मीरटीकाकृतां पाठस्तु 'विनाशिनो' इति।

अनवच्छिन्नस्य निरवयवस्य नित्यस्यात्मनो विनाशाभावादस्य हननक्रियायां कर्तृत्वं कर्मत्वं च न संभवतीत्यर्थः ॥ २० ॥

अत्रोपपत्तिमाह—

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २१ ॥

न जायते म्रियते वेति जन्ममरणयोरभावे हेतुमाह । कदाचिन्नायं भूत्वा अयं भीष्मादिर्जीवगणः कदाचिज्जात्वपि प्राग्भूत्वा न न, अतः काकुवाचितया प्राग्भूत्वा एवास्तीत्यर्थः । ततश्चातीतकालस्थित्याप्यभूत्वा भाविन्यपि क्षणे जन्म नास्तीत्यर्थः । तथेह भूत्वा भूयः पुनः भविष्यति काले । भविता भविष्यत्येवेत्यर्थः । अत एवाजः उक्तलक्षणाज्जन्महीनः । अजत्वान्नित्यः । नित्यत्वात् शाश्वतः सदैकरूपः । अत एव पुराणः चिरंतनः पूर्वोत्तरकोटिरहित इत्युत्तरोत्तरं कारणमाला अपि चात्र शास्त्रसिद्धा । जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति षड् भावविकाराः[1] प्रतिषिध्यन्ते । न कदाचिज्जायते इति जन्माख्यस्य विकारस्य निषेधः । वा शब्दश्चार्थे । न कदाचिन्म्रियते चेत्यन्त्यस्य विनाशाख्यस्य विकारस्य । शाश्वत इति, सदैकरूपत्वादभूत्वाभावित्वपर्यायस्यास्तित्वस्यापक्षयाख्यस्य च विकारस्य । पुराण इति नायं चन्द्रकलावदपक्षीय नवीभूतः उपचीयत इति वृद्धिनाम्नो विकारस्य । न हन्यते हन्यमाने शरीरे इत्यवस्थान्तरप्राप्तिरूपस्य विपरिणामाख्यस्य विकारस्य प्रतिषेधः ॥ २१ ॥

एवं प्रतिज्ञातमर्थमुपसंहरति—

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम्[2] ॥ २२ ॥

---

१ द्रष्टव्यं निरुक्तम् १।१।२।

२ भास्करसमकन्याभिनवगुप्तानां चतुर्थचरणपाठस्तु 'हन्यते हन्ति वा कथम्' इति । स एव च गोण्डलकलकत्तामातृकयोरपि ।

यः पुरुषः एवमुक्तलक्षणमात्मानमविनाशिनमन्त्यविकारहीनम्, अजमाद्यविकारशून्यम्, अव्ययम् अपक्षयवृद्धिपरिणामास्तित्वशून्यम्, वेद जानाति । स पुरुषः केन प्रकारेण कं घातयति, परेण हन्यमानं प्रयुङ्क्ते, स्वयमपि च कं हन्ति । एवं निर्विकारस्यात्मनः केनचिदपि प्रकारेण नाशो न संभवतीत्यर्थः । अथ च भीष्मादीनां शिखण्ड्यादिभिः घातनं वक्ष्यमाणं न दोषायेत्यप्यासूत्रितम् ॥ २२ ॥

'नायं भूत्वा भविता' इत्यादिव्याख्यातार्थप्रसङ्गादात्मनो नित्यस्य प्राक्तनकर्मभोगार्थं पूर्वपूर्वदेहत्यागे उत्तरोत्तरदेहग्रहणं सोपपत्तिकमाह—

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २३ ॥

स्पष्टार्थमिदं पद्यम् ॥ २३ ॥

'उत्सृज्य सशरं चापम्' (१।४७) इत्यादिना यदपि शस्त्रास्त्रादिकमेतेषां हननोपकरणं त्वया संभावितं, तेनापि देहस्योच्छेदादि, न तु जीवस्य, इत्याह—

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २४ ॥

पावकेत्यादिनाग्नेयवारुणवायव्यास्त्राणां देहादेः कार्यस्योक्तिः ॥ २४ ॥

एतदेव निगमयति—

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २५ ॥

यस्मादच्छेद्योऽयं निरवयस्यावयवविभागो न संभाव्यते । 'नैनं छिन्दन्ति' इत्यादि पूर्वश्लोकेनास्यार्धस्य संबन्धः । नित्यः पूर्वापरकोटि-

रहितोऽत एव सर्वगतः स्थाणुः, स्थाणुरिव निर्विकारः । अचलः स्वभावादप्रच्युतः, सनातनः चिरकालीनः कारणहीनः ॥ २५ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २६ ॥

अव्यक्तः कस्यापीन्द्रियस्य न गोचरः, अत एवाचिन्त्यो बुद्धेरप्यगोचरः, अविकारः केनापि प्रकारेण विकारं नेतुमशक्यः ॥ २६ ॥

एवं जीवात्मनो निर्विकारत्वादशोच्यत्वं निर्दिश्यापि पार्थस्य दृढतरज्ञानानुत्पत्तेः—

३ अहंकारेण मनसा गत्यापूर्वफलेन च ।
शरीरेण च नात्मायं मुक्तपूर्वः कदाचन ॥

इति स्मृत्यनुसारे देहदेहिनोरनादिसंबन्धश्रवणात् देहोत्पत्त्यात्मोत्पत्तिं
६ देहनाशाच्चात्मनाशं मन्यमानस्य लोकवृत्तेनाप्यशोच्यत्वमाह—

अथैवैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २७ ॥

स्पष्टोऽर्थः ॥ २७ ॥

अत्रोपपत्तिमाह—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २८ ॥

स्पष्टम् ॥ २८ ॥

अपि च—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २९ ॥

अव्यक्तः पूर्वमदृष्टः आदिर्येषां तानि भूतानि प्राणिनः—

---

१ याज्ञवल्क्यस्मृति, ३ । १६४ ।
२ 'अथ चैनं' इति प्रचलितपाठः ।

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नैष्वादिं वेत्सि न त्वन्तं कस्मिन् किमनुशोचसि ॥[1]

इति स्मृतिवाक्यार्थानुसारं स्पष्टोऽयमर्थः । अथ च, अव्यक्तं पञ्चानां भूतानां सूक्ष्मावस्था प्रकृतिस्तदादिर्येषामिति वक्ष्यमाणः ( अ० ७ ) प्राकृतः सर्गोऽपि सूत्रितः ॥ २९ ॥

अर्जुनस्यैवं देहिदेहयोर्नित्यानित्यत्वविचारे प्रश्नप्रतिप्रश्नाभावादनवधानं मत्वा रुषित इव सोपालम्भमाह—

आश्चर्यवत् पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः[2] ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ ३० ॥

एनं 'न हन्यते हन्यमाने शरीरे' (श्लो. २१) इत्यादियुक्तिदर्शितस्वरूपमपि भीष्मादिजीववर्गं कश्चित्, देहाहंभावनावाननात्मज्ञो जनो भवादृशः, आश्चर्यवदसंभाव्यमिव पश्यति । सति देहे उपलभ्यते, देहनाशे तु नोपलभ्यते इति दृश्यस्य देहस्य भ्रान्त्या तत्त्वं न विमृशतीत्यर्थः । अन्यो वक्ता मद्विधः सर्वज्ञः परमेश्वरः एनमुक्तपूर्वं जीववर्गमाश्चर्यवदसंभाव्यं वक्ति किं, काका युक्तिसंभाव्यमेव वक्तीत्यर्थः । च, पुनः, एनमन्यः अर्जुनादपरः किमाश्चर्यवत् शृणोति यथायमर्जुनः । एवमविनाशिनं श्रुत्वापि नैवावधारयति । तथा श्रुत्वाप्येनं किं न वेद, अपि तु सर्व एवाभ्यासेन यतमानो वेदेति । प्रकृतोपयोगात् सहृदयहृदयंगमोऽयमर्थोऽर्जुनावधानार्थम् । यस्त्वत्र श्रीपादैरर्थो व्याख्यातस्तस्येदानीमनुत्पन्नदृढबोधो जनो नोपदेशविषय इति सहृदयाः प्रमाणम् ॥ ३० ॥

---

१ ± शान्तिपर्वन्, १७४।१८ ।

२ 'तथैव चान्यः' इति प्रचलितपाठस्थाने 'तथैनमन्यः' इत्यभिनवगुप्तपाठः, कलकत्तामातृकापाठश्च । टीकायामानन्दवर्धनेन स एव स्वीकृत इति भाति । 'तथैवमन्यः' इति भास्कररामकविपाठः ।

एवमुपालम्भपूर्वमुपदेशस्य हृदये संनिवेशायोक्त्वापि प्रस्तुतमेवोपसंहारार्थमाह—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात् सर्वाणि भूतानि ना[1]नुशोचितुमर्हसि ॥ ३१ ॥**

३ यत एवं तस्मात् भीष्मादीननुचिन्त्य नानुशोचितुमर्हसि ॥ ३१ ॥

एवं देहिदेहयोः भेदज्ञापनेनाशोच्यत्वं प्रतिपाद्येदानीं स्वधर्मे युद्धे यदधर्मत्वमारोपितं तन्निरासितुं 'यः श्रेयः स्यान्निश्चितं ब्रूहि' (श्लो० ७)
३ इति प्रार्थितोत्तरं च वक्तुं प्रस्तौति—

**स्वधर्ममपि चावेक्ष्य न प्रकम्पितु[2]मर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३२ ॥**

धर्म्याद्धर्मशास्त्रोपदिष्टात् अन्यच्छोकेन भिक्षाचरणादि श्रेयो निःश्रेयसकरम् । ज्ञानं कर्म च समुच्चितं श्रेयस्करमित्यासूत्रितम् ॥ ३२ ॥

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**[3]सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३३ ॥**

यदृच्छया यत्नं विनोपपन्नम् । स्वर्गद्वारमपावृतमुद्घाटितम् । सुखिनो भाग्यवन्तः ॥ ३३ ॥

युद्धस्याकरणे प्रत्यवायं दर्शयति—

**अथ चेत् त्वमिमं ध[4]र्म्यं संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३४ ॥**

उभयोरेव लोकयोः प्रत्यवाय इत्यर्थः ॥ ३४ ॥

---

१ 'न त्वं शोचितुम्' इति प्रचलितपाठो रामकविनाभिनवगुप्तेन च स्वीकृतः । 'नात्र शोचितुम्' इति गोण्डलमातृकापाठः । भास्करपाठस्तथा कलकत्तापाठश्च मूलानुसारी ।

२ 'विकम्पितुम्' इति प्रचलितपाठः प्रायः सर्वैः स्वीकृतः । 'त्वं कम्पितुम्' इति कलकत्तापाठः ।

३ अभिनवगुप्तपाठः कलकत्तापाठश्च 'सुकृतात्' इति ।

४ 'इमं धर्म्यं' इतिस्थाने 'धर्म्यमिमं' इति भास्करपाठः ।

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३५ ॥

अव्ययामनवच्छिन्नां दीर्घकालाम् । संभावितस्य शौर्यादिगुणवत्त्वेनोत्प्रेक्षितस्याकीर्तेर्मरणं वरमित्यर्थः ॥ ३५ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां[1] च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३६ ॥

स्पष्टम् ॥ ३६ ॥

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३७ ॥

नु किमिति वितर्के । अतो नान्यत् दुःखमित्यर्थः ॥ ३७ ॥

युद्धे तु क्रियमाणे गुणा एवोभयत इत्याह—

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३८ ॥

॥ ३८ ॥

एवं लोकवृत्तेन स्वकर्मण्यभिमुखीकृत्य श्रेयःकारणज्ञानस्य कर्मणा समुच्चयमुद्दिशति—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३९ ॥

३ रागद्वेषाभ्यां विना प्रवृत्तस्य क्षत्रियस्यैष स्वधर्मोऽवश्यानुष्ठेय इति
युद्धार्थमुद्युक्तो भव । एवमनेन प्रकारेण स्वधर्मानुष्ठानाद्बन्धुहनने
शङ्कितं पापं नाप्स्यसि ॥ सर्वदा स्वकर्मानुष्ठानात् भोगापवर्गावेव
६ प्राप्स्यसीत्यर्थः ॥ ३९ ॥

यदि निष्कामतयानुष्ठेयस्यास्य फलं किमपि न ग्राह्यं, तद्व्यर्थमेतदनुष्ठानमिति शङ्कापनोदाय ज्ञानसमुच्चितकर्मानुष्ठानस्य श्रेयःप्राप्तिरेव

---

१ 'येषां' इतिस्थाने 'एषां' इति रामकविपाठः, गोण्डलपाठश्च ।

फलम् इत्युपदिशन्, देहिदेहयोर्नित्यानित्यविचारणया ज्ञानविषयां मतिमुद्दिश्य कर्मविषयां लक्षयितुमुपक्रमते—

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ४० ॥

सांख्ये, सम्यग्देहिदेहयोर्नित्यानित्यविचारणाद्भेदेन ख्यापने ज्ञाने, एषा बुद्धिस्तवोक्ता । तु पुनः, योगे, युक्तौ कर्मणः करणप्रकारे फलाकाङ्क्षां विनानुष्ठाने । यया योगबुद्ध्या युक्तः समुच्चितः कर्मणां बन्धं बन्धकत्वं त्यक्ष्यसि । फलाकाङ्क्षां विनावश्यकं कर्म कृते बन्धकं न भवति इत्यर्थः ॥ ४० ॥

अत्रोपपत्तिमाह—

नेहाभिक्रम[1]नाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४१ ॥

इहावश्यके कर्मणि फलाकाङ्क्षां विना क्रियमाणे, अभिक्रमस्यानुष्ठानस्य नाशो निष्फलत्वं नास्ति । अनुष्ठानाद्धि प्रत्यवायो, विहिताकरणोद्भवो मोक्षप्राप्तिप्रतिबन्धको विघ्नो, न विद्यते न जायते । यतः, अस्य स्वकर्मानुष्ठानस्य स्वल्पमपि लेशोऽपि महतो भयादनवरतं जन्ममरणसंसरणभयाद्रक्षति । अत्रोपदेशसर्वस्वे ज्ञानकर्मसमुच्चयवाचकः श्रुतिस्मृतीनां प्राग्लिखितानां सर्वासामर्थोऽनुसंधेयः ॥ ४१ ॥

तस्मात् समुच्चितयोः ज्ञानकर्मणोः एकस्यैव फलस्य निःश्रेयसस्यारम्भकत्वाद्बुद्धिरपि समुच्चयात्मिका ह्येकैवेत्याह—

व्यवसायात्मिका बुद्धिरेकैवं[2] कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४२ ॥

हे कुरुनन्दन । उक्तप्रकारेण समुच्चिताभ्यां ज्ञानकर्मभ्यां निःश्रेयसं प्राप्यमिति निश्चयात्मिका बुद्धिरेकैव । अव्यवसायिनां निश्चया-

---

१ 'नेहातिक्रम॰' इति पाठः गोण्डलमातृकायां तथा कासुचित् काश्मीरटीकामातृकासूपलभ्यते, अन्यासु तु यथामूलम् ।

२ 'एकेह' इति प्रचलितपाठः ।

भावात् ज्ञानं विना कर्मैकान्तरतानाम्, तथा कर्म संन्यस्य केवलं ज्ञानमेवाभ्यस्यतां, बुद्धयो बहुशाखाः संशयविपर्ययादिभिः प्रकारैर्भिन्ना अवच्छिन्ना भवन्ति ॥ ४२ ॥

तत्र केवलकर्मिणो दर्शयति—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः[1] पार्थ नान्यदस्तीति वादिनः ॥ ४३ ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्[2] ।
क्रियाविशेषबहुलां[3] भोगैश्वर्यगतिं[4] प्रति ॥ ४४ ॥
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४५ ॥

वेदानां वादेषु पाठमात्रेषु रताः, परमार्थतात्पर्यानभिज्ञाः, अत एव नान्यदस्तीति वादिनः—'यावज्जीवमग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिश्रुतेः केवलेन कर्मणा स्वर्गशब्दवाच्यं निरतिशयं मुख्यमेव प्राप्यम्। ततोऽन्यज्ज्ञानप्राप्यमपवर्गाख्यं फलं नास्तीति विवादशीलाः। अत एव कामात्मानः। अप्राप्तप्रेप्सा कामः, तस्मिन्नात्मा मनो येषाम्। अत एव च जन्मना देवलोकादावुत्पत्त्या कर्मणां फलप्रदां, तथा क्रियाणां काम्ययज्ञविधीनां विशेषैः भेदैः बहुलां नानाविधां, भोगे प्राप्तानां विषयाणामास्वादे ऐश्वर्ये सामर्थ्ये तस्य गतिं प्रति, देवादिजन्मना विषयास्वादप्राप्त्यर्थं, स्वर्गपरा स्वर्ग एव पर उत्कृष्टोऽभिलषणीयो येषाम्, ईदृशाः, अविपश्चितः, विशेषेण पश्यन्तीति विपश्याः परमार्थदर्शिनः, तद्वदाचरन्त इति णिचि क्विपि च। विपश्च ते, चेतयन्तीति चितश्च ते, विपश्चितः, इति व्युत्पत्त्यनुगमात् परमार्थविशेषमपश्यन्तः विचारहीनाः। यामिमां प्रसिद्धां वाचं

१ 'वेदवादपराः' इति प्रायः काश्मीरपाठः।
२ '॰फलप्रदाम्' इति तु प्रचलितपाठः।
३ '॰बहुलाः' इति प्रायः काश्मीरपाठः।
४ '॰गतीः' इति प्रायः काश्मीरपाठः।

वेदात्मिकां परमेश्वरवाणीं पुष्पितां, परमार्थफलानवेक्षया दृष्टश्रुतमात्रैरेव मनोहरैः स्त्र्यन्नपानाद्यैः विषयैरेव पुष्पैर्विकासितां, प्रवदन्ति स्वर्गादियज्ञफलतात्पर्यैव श्रुतिरिति प्रलपन्ति। तया वाचापहृतचेतसां विचारहीनानाम्। अत एव हि भोगैश्वर्यप्रसक्तानाम्। निश्चयात्मिका बुद्धिः समाधौ न विधीयते इति कर्मकर्तरि यक्॥ ४३॥ ४४॥ ४५॥

एतदेव प्रपञ्चयति—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥ ४६॥

वेदाः 'स्वर्गकामो यजेत' इत्यादयः श्रुतयः, परमार्थानभिसन्धानात् त्रयाणां गुणानां भावेन सुखदुःखमोहजनकत्वेन कारणेन विषयाः, विषिण्वन्ति बध्नन्तीति व्युत्पत्त्या विषयाः बन्धकाः सन्ति। सुखदुःखमोहबुद्ध्या सुखादिकामनया क्रियमाणानि वैदिकानि कर्माणि बन्धकानि भवन्तीत्यर्थः। निस्त्रैगुण्यो भव सुखादिबुद्धीरतिवर्तस्वेत्यर्थः। कथमित्याह। निर्द्वन्द्वः, सुखदुःखे रागद्वेषौ शीतोष्णे कामक्रोधौ सहमानः, सत्त्वं धैर्यमवलम्ब्य स्थितः, अत एव योगादलब्धलाभात्, क्षेमाल्लब्धस्य पालनाच्च, निवृत्तः। आत्मवान् निष्कामतया नित्यनैमित्तिकानि कर्माणि कुर्वाणः, ज्ञानैकनिष्ठ इत्यर्थः॥ ४६॥

त्रैगुण्यविषयेषु वेदेष्वनुष्ठानपरेण न भवितव्यमित्याह—

यावानर्थ उदपाने सर्वतःसंप्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥ ४७॥

सर्वतः सर्वदिक्षु संप्लुतोदके उदकपूर्णे उदपाने तटाकादौ यावानर्थः, स्नानपानादिप्रयोजनं भवति। यावता स्वल्पमात्रेणैव प्रयोजनं निर्वहति, तावन्मात्रमेवोपादेयम्। न सर्वतोऽवगाहनीयम्। तथैव, तावानेव विजानतः ब्राह्मणस्य, ब्रह्मणि भक्तिमतो ज्ञानिनः। अत्रायं वाक्यार्थः। यथा सुसंपूर्णादपि ह्रदादेः स्नानादिष्वर्थसंपादमात्रार्थं स्तोकमेव जलमुपादीयते, न तु परितोऽवगाह्यते, तथा नानाविधकाम्यनित्यनैमित्तिककर्मप्रतिपादकेभ्यः सर्वेभ्यो वेदेभ्यः काम्याभियोगं त्यक्त्वा, ज्ञानसमुच्चितस्वधर्मप्रतिपादके वेदैकदेशे तात्पर्यवता भाव्यमिति॥ ४७॥

अत्र योगयुक्तिमाह—

कर्मण्येवाधिकारस्ते[1] मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४८ ॥

कर्मणि, रागद्वेषाभ्यां विना स्वजातिविहिते युद्धे, एव तवाधिकारः कर्तृत्वम्। मा निषेधे। कदाचन फलेषु नाधिकारः। यागजन्यहिंसायामिव ब्राह्मणस्य युद्धजन्येषु बन्धुवधादिना पापेषु न कर्तृत्वम्। उक्तवक्ष्यमाणया बुद्ध्या तल्लेपो नास्ति इत्यर्थः। अत एव कर्मणो युद्धस्य फले हिंसायां, हेतुः प्रागुक्तः कुलक्षये हेतुवादो, यस्य सः, हेतुवादपरो मा भूः। तथा हेतुवादात् प्राप्ते, न योत्स्य इतीत्थमकर्मणि कर्माकरणे, तव सङ्ग आग्रहो मास्तु ॥ ४८ ॥

तर्हि कथमिदं कार्यमित्याह—

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४९ ॥

स्पष्टोऽर्थः ॥ ४९ ॥

यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ५० ॥[2]

समारभ्यन्ते इति समारम्भाः कर्माणि। निर्गता आशीः फलस्पृहैव बन्धनं येषां ते। यस्य पुंसः त्यागे, 'सर्वकर्मफलत्यागम्' इत्यादिनाष्टादशे (श्लो० २) सिद्धान्तिते। यस्य सर्वं कर्म हुतं, क्रियमाणमेव दग्धबीजवत् प्रसवशक्तिहीनं कृतम्, स त्यागी। स एव च बुद्धिमान् स्वार्थसंपादनपटुः, न कर्मसंन्यासीत्यर्थः ॥ ५० ॥

अत एवंविधं ज्ञानपूर्वं कर्म कार्यं, न केवलमित्याह—

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ५१ ॥

हि यस्मात्, अवरं ज्ञानहीनं कर्म। बुद्धिः ज्ञानं, युज्यते इति योगः।

१ 'कर्मण्यस्त्वधिकारस्ते' इति प्रायः काश्मीरपाठः।

२ अयमधिकः श्लोकः काश्मीरपाठे भास्करवर्जं सर्वत्र दृश्यते।

कर्म, बुद्धियोगाज्ज्ञानसमुच्चितात् कर्मणः सकाशात्, दूरेणास्ति । नैतच्छ्रेयः साधयितुं क्षममित्यर्थः । अतो 'यस्य सर्वे समारम्भाः' इत्युक्तम् । ज्ञाने शरणमन्विच्छ, अत्रैव तत्परो भव । कृपणा ज्ञानहीनाः फलहेतवः फलार्थं कर्मणि प्रवर्तन्ते इत्यर्थः ॥ ५१ ॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५२ ॥

बुद्धियुक्तः, ज्ञानसमुच्चितकर्मकर्ता, उभे सुकृतदुष्कृते जहाति । रागद्वेषाभ्यां विना प्रवृत्तेस्तयोः फलेन न संबध्यते । तस्माद्योगाय, ज्ञानकर्मणोः समुच्चयाय, युज्यस्वोद्योगी भव । योगः ज्ञानसमुच्चय एव कर्मसु कौशलं, कर्तुः प्रवीणता ॥ ५२ ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
कर्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५३ ॥

मनीषिणो, बुद्धियुक्ता ज्ञानसमुच्चितकर्मकर्तारः । कर्मजं फलं त्यक्त्वा, अत एव, कर्मणो बन्धकत्वाभावात् । कर्मबन्धात्, इदंशरीरकृतानां कर्मणां फलभोगार्थं भाविनः शरीरस्य ग्रहणम्, तत्रापि कृतानां फलभोगार्थं परस्य ग्रहणम्, इतीत्थं शृङ्खलारूपो बन्धः संसारः तस्माद्विनिर्मुक्ताः, अनामयं पदं गच्छन्ति ॥ ५३ ॥

अत्र क्रममाह—

यदा ते[1] मोहकलिलं बुद्धिर्व्यवतरिष्यति[2] ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५४ ॥

मोहमज्ञानमेव कलिलं चित्तकालुष्यम्, अनादिजन्माभ्यस्तमनात्मनि देहादावात्मज्ञानम् । लङ्घयिष्यति । तदा श्रोतव्यस्य, श्रावयिष्यमाणस्योपदेशस्य, श्रुतस्य श्रुतपूर्वस्य च, निर्वेदं श्रवणेच्छाविरहं, गन्तासि कृतार्थत्वात् ॥ ५४ ॥

---

१ 'ते' इतिस्थाने 'त्वं' इति रामकविपाठः ।

२ 'व्यतितरिष्यति' इति प्रचलितपाठः गोण्डलमातृकायामभिनवगुप्तटीकायां च दृश्यते । 'व्यवतरिष्यसि' इति रामकविपाठः ।

श्रुतिविप्रतिपन्ना ते यदा[1] स्थास्यति निश्चला[2]।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५५ ॥

श्रुतोपदेशान्तरश्रवणे विप्रतिपन्ना निर्विण्णा निरपेक्षा निश्चला, बलवद्भिरपि विकल्पैरकम्पिता समाधौ स्थास्यति। समाहितेऽन्तःकरणे
३ स्थितिं प्राप्स्यति। योगं ज्ञानकर्मसमुच्चयाख्यां युक्तिं प्राप्स्यसि। अत्र च समाधावित्युपलक्षणं, ध्यानधारणासमाधिसंज्ञे संयमे, आभ्यन्तरे योगाङ्गे वक्ष्यमाणे, यदा बुद्धिर्मनो निश्चलं स्थास्यति। तदा
६ योगमष्टाङ्गं चित्तवृत्तिनिरोधं, संयमयोगमाप्स्यसि इत्यपि सूत्रितम् ॥ ५५ ॥

समाधावचलबुद्धिः स्थास्यसीति भगवद्वचनेन प्राप्तावसरः, शनैः शनैरज्ञानावरणापगमेन समुत्पन्नजिज्ञासः—

अर्जुन उवाच।

स्थित[3]प्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थिर[4]धीः किं प्रभाषेत किमासीत व्रजेच्च[5] किम् ॥ ५६ ॥

३ का भाषा संज्ञा, किं प्रभाषेत किमयं वक्ति, किमासीत केन प्रकारेण तिष्ठति, किं व्रजेच्च किं प्राप्नुयात् ॥ ५६ ॥

एतदेवोत्तरयितुम्—

श्रीभगवानुवाच।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थित[6]प्रज्ञस्तदोच्यते ॥ ५७ ॥

---

१ सर्वत्र 'यदा' इत्येव पाठः। स एव च टीकायां ५पङ्क्तौ स्वीकृतः।
२ 'निश्चिता' इति रामकविपाठः, कलकत्तामातृकायामपि दृश्यते।
३ 'स्थिर॰' इति गोण्डलपाठः, क्वचित् रामकविमातृकास्वपि वर्तते।
४ 'स्थित॰' इति प्रचलितपाठः।
५ 'व्रजेत' इति प्रचलित पाठः
६ 'स्थिर॰' इति गोण्डलपाठः।

कामान् बाह्यार्थविषयान् नानासंकल्पान् यदा त्यजति। आत्मन्येव
३ परमात्मस्वरूपे एवात्मना अन्तःकरणेन तुष्टः, परमात्मज्ञानैकप्रावरणः,
तदा स्थितप्रज्ञ उच्यते ॥ ५७ ॥

इति सामान्येनोक्त्वा विशेषमाह—

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थिर[1]धीर्मुनिरुच्यते ॥ ५८ ॥

अनुद्विग्नमना निर्विकारचित्तः। रागः विषयेषु स्पृहा, भयं प्राप्तेषु
३ विषयेषु व्यपगमात् त्रासः, क्रोधः व्यपगतेषु चित्तज्वलनं, ते
यस्य व्यपगताः स वीतरागभयक्रोधः। मुनिः, परमेश्वरमननं
शीलयन् ॥ ५८ ॥

उक्तां निर्विकारतां प्रतिपादयति—

यः सर्वत्रानभिस्नेहस्तत् तत् प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य[3] प्रज्ञा प्रतिष्ठिता ॥ ५९ ॥

स्नेहः चित्तासक्तिः। सर्वत्र दारधनादौ। तद्रहितोऽनभिस्नेहः। शुभं
३ प्राप्य नाभिनन्दति, न स्पृहयति, अशुभं प्राप्य न द्वेष्टि ॥ ५९ ॥

येनोपायभूतेन कर्मणा स्थितप्रज्ञत्वं प्राप्यते तन्मुखेनाह—

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः स्थितप्र[2]ज्ञस्तदोच्यते ॥ ६० ॥

स्पष्टम् ॥ ६० ॥

---

१ 'स्थित°' इति प्रचलितपाठः, कलकत्तामातृकायां तथा क्वचित् रामकविटीकामातृकास्वपि दृश्यते।

२ चतुर्थचरणपाठः गोण्डलमातृकायां तथैव रामकव्यभिनवगुप्तटीकयोः 'स्थित(र)प्रज्ञस्तदोच्यते' इति दृश्यते।

३ 'तस्य प्रज्ञा प्रतिष्ठिता' इति चतुर्थचरणस्य प्रचलितः पाठः। 'स्थिर°' इति रामकव्यभिनवगुप्तयोः पाठो, गोण्डलपाठश्च।

इन्द्रियाणामिन्द्रियार्थेभ्यः संहारः विषयाणामग्रहणात्, गृहीतेषु वा अनासक्तेरिति पक्षद्वये उत्तरमेव पक्षं समर्थयति—

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ६१ ॥**

आह्रियते इत्याहारो विषयग्रहणं, तस्मान्निर्गतस्योपवासादिना विषयग्रहणमकुर्वतः, रसो विषयाभिलाषस्तद्वर्जं विनिवर्तते । निराहारस्य विषयाभिलाषः तिष्ठत्येवेत्यर्थः । परं दृष्ट्वा, वक्ष्यमाणप्रकारेण संयमज्ञानेन परमोपेयं ब्रह्म साक्षात्कृत्य, रसो विषयाभिलाषो निवर्तते । इहाष्टाङ्गयोगेन परमेश्वरसाक्षात्कारः सूत्रितः ॥ ६१ ॥

विषयाभिलाषपरिहारस्य दुःसाधतामाह—

**यत्[1] तस्यापि हि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६२ ॥**

हि निश्चये । यत् तस्यापि अष्टाङ्गयोगाभ्यासेन कृतयत्नस्यापि ॥ ६२ ॥

एवं चेत् किं कार्यमित्याह—

**तानि संयम्य मनसा युक्त आसीत तत्परः[2] ।**
**वशे हि यस्येन्द्रियाणि तस्य[3] प्रज्ञा प्रतिष्ठिता ॥ ६३ ॥**

युक्तः अभ्यस्ताष्टाङ्गयोगः, तानीन्द्रियाणि संयम्य मनसैव निगृह्य वशीकृत्य, न तु निराहारतया, तत्परः तेषामिन्द्रियाणां संयमपर एवासीत । तत्रैवावहितचित्तो न तु निरपेक्षः । हि यस्मात्, यस्य इन्द्रियाणि वशे तस्य प्रज्ञा प्रतिष्ठिता । अत्र 'मत्पर' इत्यपि पुस्तकपाठदर्शनात्, अहं वासुदेव एव पर उपास्यो यस्येति व्याख्यायाम्—

ईश्वरप्रणिधानाद्वा ।

---

१ 'यततो ह्यपि' इति प्रचलितपाठः ।

२ 'मत्परः' इति प्रचलितपाठो गोण्डलमातृकायां तथाभिनवगुप्तेन च स्वीकृतः ।

३ 'स्थिरप्रज्ञः स उच्यते' इति चतुर्थचरणस्य गोण्डलपाठः ।

इति योगशास्त्रसूत्रार्थावेक्षया परमेश्वराभिध्यानमात्रेणापीन्द्रियवशीकारो जायत इत्यर्थः ॥ ६३ ॥

इन्द्रियाणां प्रमाथित्वं दर्शयति—

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ॥ ६४ ॥
क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६५ ॥

निगृहीतबाह्येन्द्रियस्यापि मनसो निग्रहाभावाद्विषयांश्चिन्तयतः तेषु सङ्गो जायते । सङ्गात् तु कामः, कथमेतान् प्राप्स्यामीति तृष्णा । प्राप्तेष्ववश्यं विनश्वरत्वेन क्रोधश्चित्तज्वलनं, क्रोधात् संमोहः कार्याकार्यविचाराभावः, संमोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशानुसंधानाभावः, स्मृतिनाशाद्बुद्धिनाशः, बुद्धेः प्रारब्धस्य परमार्थनिश्चयस्य नाशः, बुद्धिनाशात् प्रणश्यति समुपादेयं स्थितप्रज्ञत्वं नास्तीत्यर्थः ॥ ६४ ॥ ६५ ॥

इन्द्रियवशीकारे गुणानाह—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६६ ॥

विधेयो वश्यः समाहित आत्मा अन्तःकरणं यस्य । प्रसादं सुखादिवाञ्छारूपपङ्कसंपर्काभावम् ॥ ६६ ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६७ ॥

एवं प्रसादे प्राप्ते सति अस्य पुंसः सर्वेषां दुःखानां, आध्यात्मि-

---

१ पातञ्जलयोगसूत्र, पा० १, सू० २३ ।

२ 'उपजायते' इति प्रचलितपाठः, प्रायः काश्मीरपाठश्च ।

३ '°विमुक्तैस्तु' इति रामकण्ठ्यभिनवगुप्तटीकयोः पाठः । '°विमुक्तस्तु' इति गोण्डलपाठः, '°वियुक्तस्तु' इति कलकत्तापाठः ।

४ 'विषयानिन्द्रियैश्चरन्' इति [illegible] मातृकायाम् ।

कादीनां, हानिः क्षय उपजायते । हि यस्मात् प्रसन्नचेतसः बुद्धिराशु
३ पर्यवतिष्ठते, परितो व्याप्नोति ॥ ६७ ॥

अमुमेवार्थं व्यतिरेकमुखेनाह—

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६८ ॥**

अयुक्तस्य, योगाभ्यासहीनस्य ज्ञानकर्मसमुच्चययुक्तिहीनस्य च, बुद्धिः
३ सुखदुःखादिसाम्यज्ञानं, नास्ति न जायते । एवं अयुक्तस्य भावना,
श्रद्धा फलावश्यंभावनिश्चयो, नोत्पद्यते । अभावयतः अश्रद्दधतः,
शान्तिर्विषयोपरतिर्नास्ति । अशान्तस्य विषयाभिलाषिणः, कुतः
६ सुखम् ॥ ६८ ॥

अत्र हेतुमाह—

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६९ ॥[1]**

॥ ६९ ॥

एतत् सर्वमुपसंहरति—

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ७० ॥[1]**

स्पष्टम् ॥ ७० ॥

स्थितप्रज्ञस्य व्यङ्ग्येन जगद्विलक्षणां वृत्तिमाह—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः ॥ ७१ ॥**

---

१ एतौ श्लोकौ क्वचित् काश्मीरपाठे, मन्येऽनवधानात्, न पठितौ ।

२ 'सर्वतः' इति क्वचित् रामकविटीकाया मूलपाठे ।

३ 'स्थिरप्रज्ञा च सा स्मृता' इति चतुर्थचरणपाठो गोण्डलमातृकायामेव दृश्यते ।

४ 'निशा' इति प्रचलितपाठः । स तु क्वचित् काश्मीरटीकामातृकास्वपि दृश्यते ।

सर्वभूतानामनवस्थितबुद्धीनां याविद्या तत्त्वज्ञानात्मिका निशा अस्ति, संचारादेर्विषयो नास्ति । मूढा यस्यां विद्यायां न प्रचरन्ति तस्यां विद्यायामेव सर्वभूतनिशायां संयमी स्थितप्रज्ञो जागर्ति, विगतमोह-निद्रः आस्ते । यस्यामविद्यायां संसारव्यवहारवृत्तौ भूता विमूढाः जाग्रति, सुखदुःखादिकामनया तत्तत्कर्मकरणव्यग्रबुद्धयः विनिद्रतां सावधानतामनुभवन्ति, सेयमविद्यात्मिका रात्रिः, संचारस्याविषयः । सर्वमिदं विस्तृत्याभिनवगुप्तपादैः ध्वन्यालोचने[1] अर्थान्तरस्याविवक्षि-तवाच्यस्य व्यङ्ग्यस्योदाहरणे व्याख्यातम् । तथा च मोक्षोपाये-ष्वपि—

या निशा सर्वभूतानामविद्यास्तमयात्मिका ।
परो बोधः परा शान्तिस्तत्रासौ सममास्थितः ॥
यस्मिञ्जाग्रति भूतानि दृश्येऽस्मिन् दुःखदायिनि ।
तत्रासौ सततं सुप्तस्तन्न पश्यत्यसौ सुखी ॥

इति ॥ ७१ ॥

उपमाननिदर्शनेन स्थितप्रज्ञस्वरूपमाह—

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत् कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७२ ॥**

आपो नानादिगन्तरागतसरिद्रूपाः । समुद्रं ताभिरापूर्यमाणं अपि अचलप्रतिष्ठं, अपरित्यक्तपूर्वावस्थं, निष्प्रकम्पापारगम्भीरनिजा-कृतिस्थं, यथा प्रविशन्ति सावेगमागता अपि तस्मिन्नेव लीयन्ते तद्वत् स्थितप्रज्ञं सर्वे कामाः प्रविशन्ति, यः प्रसङ्गागतैः सुखादिहेतुभिर्विषयैः भुक्तैरपि क्षोभं चित्तविकारं नेतुं न शक्यते, स एव शान्तिमाप्नोति ; न तु कामकामी । प्रत्यक्षं परिहृतेन्द्रियव्यापारोऽपि मनसा कामान् विषयान् कामयमानः शान्तिं नाप्नोति । अत्रेदं तात्पर्यं, ज्ञानसमुच्चितेन कर्मणैव मुक्तिः, न तु कर्मसंन्यासेन ॥ ७२ ॥

---

१ ध्वन्यालोकलोचने (काव्यमालायां) १२५ पृष्ठे द्रष्टव्यम् ।

एतदेव प्रकाशयति—

**विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥**

विहाय—'कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन। सङ्गं त्यक्त्वा फलं चैव' इत्यष्टादशाध्याय(श्लो.९)सिद्धान्तानुगमेन क्रियमाणे एव कर्मणि फलासक्तिं त्यक्त्वा, अत एव निःस्पृहः यः पुमान् सर्वान् कामांश्चरति, इन्द्रियैराहरत्येव। स एवं निर्ममः, ममेदं भूयादिति ममताया निष्क्रान्तः, तथा निरहंकारः, अहं कर्ता भोक्तेत्यादिवासनाहीनः, शान्तिमधिगच्छति ॥ ७१ ॥

एतमध्यायार्थमुपसंहरति—

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।**
**स्थित्वा स्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥**

एषा 'न ह्येवाहं जातु नासम्' (श्लो० १२) इत्यारभ्याध्यायान्तं प्रोक्ता ब्राह्मी ब्रह्मणः परापरस्वरूपस्य परमेश्वरस्य संबन्धिनी स्थितिर्नित्यवर्तनप्रकारः। तथा ब्राह्मी स्थितिः, यया युक्त्या ब्रह्मणि स्थीयते सा स्थितप्रज्ञता च, ते प्रोक्ते इत्यन्वयः। हे पार्थ एनां द्विप्रकारार्थामेव ब्राह्मीं स्थितिं प्राप्य विचार्य लब्ध्वा च, पुरुषो न मुह्यति। अनात्मन्यात्मभ्रमरूपं मिथ्याज्ञानं, विषयभोगेन क्षोभं च नाप्नोति। अपिशब्दादयं वाक्यार्थः। इयं स्थितिर्हि बहुतरप्रयाससाध्या परमेश्वरानुग्रहलभ्या वेति अन्तकालात् प्राक् दृढतरभूतेन्द्रियसंघाते सर्वविमर्शसामर्थ्ये देहे सति जातायामपि निरन्तराभ्यासक्रमेण परमेश्वरानुग्रहेण अन्तकालेऽपि विकलेन्द्रियभूतसंघाते मरणावस्थासमयेऽप्यस्यां स्थित्वा स्थितप्रज्ञतामधिगम्य निःश्रेयसप्राप्तिरिति सिद्धम् ॥ ७२ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
द्वितीयोऽध्यायः ॥ २ ॥

# ॥ तृतीयोऽध्यायः ॥

अथ कर्मण्येवाधिकारस्ते ( २।४८ ) इति, दूरेण ह्यवरं कर्म बुद्धियोगात् ( २।५१ ) इत्यादिभगवद्वचनं पृथक् पृथक् ज्ञानस्य कर्मणश्च प्रशंसार्थं ज्ञात्वा, एतयोः समुच्चयमुद्दिष्टमपि चित्तानवधानादज्ञात्वा, संशयितो भगवन्तम्—

अर्जुन उवाच ।

**ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत् किं कर्माणि घोरे मां नियोजयसि केशव ॥ १ ॥**

हे जनार्दन, दूरेण ह्यवरं कर्म इत्याद्युक्त्या कर्मणः सकाशाज्ज्ञानमेव तव यदि प्रकृष्टतमं मतं, तत् किमर्थं कर्मणि युद्धाख्ये घोरे गुरुज्ञातिहिंसया क्रूरे महापातकहेतौ निन्दिते योजयसि कर्मण्येवाधिकारस्ते इत्यादिवाक्यैरावश्यकतया प्रेरयसि ॥ १ ॥

**व्यामिश्रेणैव[1] वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥**

क्षणं कर्मप्रशंसा क्षणं ज्ञानप्रशंसेति व्यामिश्रेण, अनयोरन्योन्यविरोधात् संकीर्णेन, वाक्येन मे बुद्धिं व्यामोहयसीव । मम मुग्धतामवेक्ष्योपहससीव, इतीवशब्दगम्य उपालम्भः । तस्मात् कारणादेतयोर्मध्यादेकं, ज्ञानं वा कर्म वा, मयानुष्ठेयमिति निश्चित्य वद, येनाहं श्रेय आप्नुयाम् ॥ २ ॥

अत्रोत्तरं पूर्वाध्यायोद्दिष्टस्य ज्ञानकर्मसमुच्चयानुष्ठानेन मुक्तिरित्युपदेशस्यास्मिन्नध्याये लक्षणं लक्षयितुम्—

श्रीभगवानुवाच ।

**लोकेऽस्मिन् द्विविधा निष्ठा मया प्रोक्ता पुरानघ[2] ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

---

१ 'व्यामिश्रेणेव' इति शाङ्करपाठः ।

२ 'पुरा प्रोक्ता मयानघ' इति प्रचलितपाठो रामकविवर्जं सर्वत्र काश्मीरपाठे ।

हे अनघ, अस्मिन् लोके, पुरा द्वितीयेऽध्याये । निष्ठा निर्वहणं ज्ञानकर्मसमुच्चयानुष्ठानेन श्रेयःप्राप्तिरितीत्थं सिद्धान्तस्योक्तिः । द्विविधा द्वे विधे साधनप्रकारौ यस्याः सैकैव प्रकारद्वयाख्या, मया उक्तेत्यन्वयः। कथमित्याह—ज्ञानयोगेन सांख्यानामित्यादि । अनात्मात्मनोर्हेयोपादेयताविचारो ज्ञानं, तस्मिन् योगः समाधिः चित्तैकाग्र्यं, तेन सांख्यानां तत्त्वज्ञानां निष्ठा प्रोक्ता । तत्त्वज्ञा ह्यावश्यके कर्मणि प्रवृत्ता अपि यथोक्तात्मज्ञानसमाधेर्न च्यवन्ते । तथा शास्त्रचोदिता नियता वर्णाश्रमक्रिया कर्म, तत्र योगो, ज्ञानापरित्यागेन कर्मानुष्ठानपरत्वं, तेन कर्मयोगेण, योगिनां युक्त्या कर्म अनुतिष्ठतां निष्ठा निर्वाहः प्रोक्तः । तदित्थं ज्ञानिनां कर्माविनाभावात् कर्मिणां च ज्ञानाविनाभावादेकैव निष्ठा प्रकारद्वयसाध्या एकपुरुषविषया प्रोक्ता, न तु भिन्नपुरुषविषये द्वे निष्ठे इति ॥ तथाहि । दूरेण ह्यवरं कर्मेति ज्ञानं प्रशस्य तत्समाधिप्रतिपादनाय उक्तम्—तस्माद्योगाय युज्यस्व (२।५२) इत्यादि । तस्मात् कर्मण्येवाधिकारस्ते इत्यादिना कर्मणोऽवश्यकरणीयतां प्रतिपाद्य, कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः (२।५३) इत्यादिना ज्ञाने समाधिरुक्ता । यत्त्वत्र श्रीपादैः—सांख्यानां केवलाज्ज्ञानान्मुक्तिः, कर्मयोगिणां तु कर्मनिष्ठैवेति, द्वे निष्ठे भिन्नपुरुषविषये इति, सर्वकर्मसंन्यास एव सम्यग्दर्शिनां सांख्यानामिति व्याख्यातम्। तत्रार्जुनस्य सर्वकर्मसंन्यासाभिप्रायवतः मया किमनुष्ठेयमिति निश्चयाभावादाकुलमतित्वं तदवस्थमेवेत्यलम् ॥ तथा चैतदेवोपदिष्टं प्रकारान्तरेण मोक्षधर्मेषु सुलभाजनकसंवादे जनकवाक्यैः (शान्तिपर्वणि, अ० ३२० श्लो० ३८–४२)—

सुखी मोहमवाप्तार्थः समलोष्टाश्मकाञ्चनः ।
मुक्तसङ्गः स्थितो राज्ये सदृशोऽन्यैस्त्रिदण्डिभिः ॥

मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महात्मभिः ।
ज्ञानं लोकोत्तरं यत् तत् सर्वत्यागश्च कर्मणाम् ॥

ज्ञाननिष्ठां वदन्त्येतां मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये मुनयः सूक्ष्मदर्शिनः ॥

प्रहायोभयमप्येतत् ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥

तृतीया समुच्चयरूपेति व्याख्यातं गुरुभिः ॥ ३ ॥

तदेवं ज्ञानकर्मसमुच्चयादेव मुक्तिः, न तु सर्वं कर्म संन्यस्येति प्रतिपादयति—

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

कर्मणः पुण्यापुण्यरूपान्निष्क्रान्तः पुमान्, निष्कर्मा तस्य भावो नैष्कर्म्यं मुक्तिः, पुरुषः कर्मणामनारम्भात् संन्यासात् मुक्तिं नाश्नुते । किं तु कर्मणामारम्भादेव । तथा संन्यसनादेव चतुर्थाश्रमग्रहणादेव, न च सिद्धिं समधिगच्छति । किं तु चतुर्ष्वप्याश्रमेषु ज्ञानकर्मसमुच्चयान्मुक्तिरिति । दर्शिता चात्र श्रुतिस्मृतिन्यायानामुपपत्तिः प्रथमाध्यायोपोद्घाते ॥ ४ ॥

अपि च कर्मणामनारम्भोऽप्यसंभाव्य एवेत्याह—

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

कश्चित् ज्ञानी वा मूढो वा, जात्वकर्मकृन्न तिष्ठति, कर्मकरणं विना कदाचित् कोऽपि न तिष्ठति । हि यस्मात् सर्वो देहधारी प्रकृतिजैः स्वाभाविकैरपरिहरणीयैः गुणैः सत्त्वरजस्तमोभिः, कायिकवाचिकमानसिकचेष्टाभिर्वा, कर्म कार्यते । अत्र हेतुमाह—अवशः प्रकृतेर्वशीभूतः । तथा चापि अत्रैव वक्ष्यमाणं प्रकृतिपुरुषज्ञानमासूत्रितम् ॥ ५ ॥

एवं कर्मसंन्यासस्यासंभवाद्यस्तु स्वजातिनियतं कर्म त्यक्त्वा मनसा तु विषयान् स्मरत्येव स दुराचार इत्याह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

---

१ 'मूढाचारः' इत्यभिनवगुप्तपाठः ।

३ कर्मेन्द्रियाणि दर्शनादिकर्मकरणानि चक्षुरादीनि, नियम्य स्वव्यापारान्निगृह्य ॥ ६ ॥

यस्तु नियतं कर्मानुतिष्ठत्येव स विशिष्ट इत्याह—

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

कर्मणो योगं, फलस्पृहां विना करणम् ॥ ७ ॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥**

प्रकृतिजगुणानामवश्यानुसरणात् देहस्थितये भोजनं करणीयमेव चेत् तर्हि नैष्कर्म्यं कथं सिध्यतीत्यर्थः। नियतमवश्यानुष्ठेयं नित्यं
३ यज्ञादि । शरीरस्य यात्रा, स्थितिरपि, अकर्मणो निर्व्यापारस्य न ते सिध्येत् । अशनादिकं तु शरीरस्थित्यर्थं चेत् कार्यं, नित्यस्य यज्ञादेः करणे को विमर्श इत्यर्थः ॥ ८ ॥

एतदेव प्रपञ्चयति—

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

यज्ञशिष्टभोजनं श्रुतिविहितमित्यर्थः ॥ ९ ॥

तदेतदेव विशेषतो लक्षयति—

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

प्रसविष्यध्वं, प्रसवं वृद्धिमवाप्स्यथ ॥ १० ॥

इष्टकामप्रापणोपपत्तिमाह—

**देवान् भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

देवानिन्द्रादीन्, अनेन यज्ञेन यूयं यजमाना भावयत यज्ञभागैस्तर्प-
३ यत । ते देवा वो भावयन्तु, इष्टदानेन तर्पयन्तु ॥ ११ ॥

**इष्टान् कामान् हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

यो नैष्कर्म्याभिमानी नियतं कर्म संन्यस्यति । शरीरयात्रार्थमवश्यमाहारादिकमिन्द्रियव्यापारं च करोति । स उक्तवक्ष्यमाणप्रकारेण देवैर्वृष्ट्यादिद्वारा दत्तमन्नादिकं हविर्यज्ञेष्वेतेभ्योऽप्रदाय चौर एव । तस्मान्नियतं कर्मावश्यं कर्तव्यमित्यर्थः । अनेन शरीरयात्रार्थमश्नन्नपि यज्ञमकुर्वाणः संन्यासी निषिद्धः । इत्येतदन्तं प्रजापतिवचनम्, अतः परं तु भगवद्वचनमिति गुरवः ॥ १२ ॥

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

स्पष्टमिदं पूर्वेण गतार्थम् ॥ १३ ॥

तैर्दत्तानप्रदायैभ्यो इति प्राप्तस्यान्नस्य स्तुत्या यज्ञादेरन्योन्याधारत्वमाह—

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

अन्नाददनीयाद्व्रीह्यादेः शुक्रादिबीजरूपेण परिणतात्, भूतानि चराचराणि जरायुजाण्डजस्वेदजोद्भिज्जादीनि, भवन्ति जायन्ते । अन्नस्य हि संभवो मेघात्, मेघस्य यज्ञात् संभवः, यज्ञः कर्मसमुद्भवः यजमानक्रियोद्भवः ॥ १४ ॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

कर्म यज्ञस्य इतिकर्तव्यता, ब्रह्मणो वेदादुद्भूतं विद्धि । ब्रह्म वेदो—'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदोऽथर्व॰' (बृ॰ उ॰, २।४।१०) इत्यादिश्रवणादक्षरात् परब्रह्मणस्तदुद्भूतं जानीहि । यस्मादित्थंभूतोऽयं प्रकारस्तस्मात् सर्वगतं सर्वत्र कार्यकारणत्वेनावस्थितं, नित्यं ब्रह्म परमात्मा यज्ञे प्रतिष्ठितम् । तथा च याज्ञवल्क्यः—

१ 'भोगान्' इति प्रचलितपाठः । २ याज्ञवल्क्यस्मृति, ३।१२०–२४ ।

विराट् च सोऽन्नरूपेण यज्ञत्वमुपगच्छति ।
यो द्रव्यदेवतात्यागात् संभूतो रसः उत्तमः ॥
देवान् संतर्प्य परमे यजमानं फलेन च ।
संयोज्य वायुना सोमं नीयते रश्मिभिस्ततः ॥
ऋग्यजुःसामविहितं सौरं धामोपनीयते ।
तन्मण्डलमसौ सूर्यः सृजत्यमृतमुत्तमम् ॥
यज्ञात् स सर्वभूतानामशनानशनात्मनाम् ।
एवमेतदनाद्यन्तं चक्रं संपरिवर्तते ॥

इति । अत्रैवेश्वरस्य जगत्कर्तृत्वमासूत्रितम् ॥ १५ ॥

यदस्य चक्रस्य कर्मैव मूलं तत्त्यागे जीवनं व्यर्थमित्याह—

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अल्पायुरिन्द्रियारामो[1] मोघं पार्थ स जीवति ॥ १६ ॥**

सुगमोऽर्थः ॥ १६ ॥

स्फुटीकृतात्मतत्त्वस्य जीवन्मुक्तस्य तावत् कर्माणि यावच्छरीरयात्रानुवर्तते । आत्मैकप्रतिष्ठस्य त्वभ्यर्णशरीरपातस्य परिक्षीणसर्वकर्मणस्तानि भ्रश्यन्त एवेति प्रमाणप्रमितमुपदेशमाह—

**यस्त्वात्मरतिरेव[2] स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**

इह खलु यस्य कस्यचिज्जन्तोरप्राप्तं वस्तु प्राप्तुमिच्छतः तत्साधने रतिर्जायते । ततः प्राप्तस्य तस्य भोगेन तृप्तिः, तृप्तौ तु जातायां संतोषः, प्रेप्सायां निवृत्तिः । परमार्थज्ञस्य तु सदा संनिहिते स्वात्मन्येव यस्य रतितृप्तिसंतोषाः, तस्य विदितवेद्यस्य प्राप्तप्राप्यस्य किमप्यन्यत् करणीयं प्राप्यं नास्ति । तस्यैवंभूतस्य परमात्माभेदप्राप्तस्य कार्य-

---

१ 'अघायु°' इति प्रचलितपाठ एव काश्मीरटीकान्तरेषु मातृकान्तरेषु च स्वीकृतः ।

२ 'यश्चात्मरतिः' इति रामकविपाठः, कलकत्तामातृकापाठश्च ।

मतः परं किमप्यवशिष्टं करणीयं नास्ति। इयमेव फलावस्था ज्ञानकर्मसमुच्चयानुष्ठानस्य ॥ १७ ॥

अस्यामेवावस्थायामधिकारहेत्वभावात् कर्मत्यागो, न तु प्रागिति स्पष्टं लक्षयति—

नैव तस्य कृतेनार्थो नाकृतेनेह किंचन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

तस्येत्थमवस्थितस्य कृतेन कर्मणा अर्थः प्रयोजनं नास्ति, अकृतेन च कर्मणा अर्थः प्रत्यवायाख्यो भावो न च संभवति। निर्धारणात् न चास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदर्थस्य प्रयोजनस्य व्यपाश्रय आलम्बनमस्ति। कोऽप्यस्य स्पृहणीयो नास्तीत्यर्थः ॥ १८ ॥

अतः प्राक् तु कर्मत्यागानुपपत्तिमाह—

तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥

फलेषु नासक्तः कार्यमवश्यानुष्ठेयं स्वजातिविहितं नित्यं समाचर। परं प्रकृष्टमपवर्गाख्यं वस्तु प्राप्नोति ॥ १९ ॥

अद्य त्वमेवात्र न नियुक्तोऽसि किं त्वन्येऽपीत्याह—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।

स्पष्टोऽर्थः। अत्रेतिहासस्तु मोक्षधर्मणि शान्तिपर्वणि शुकोत्पत्तौ चावगम्यः। तत्त्वविदोऽपि कर्मापरित्यागे हेत्वन्तरमाह—

लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥

लोकस्य संग्रहं सन्मार्गप्रवर्तनं मर्यादायां स्थापनम् ॥ २० ॥

अवश्यलोकमर्यादारक्षणार्थं त्वया स्वोत्तमत्वमवेक्ष्य कर्मणि वर्तितव्यमित्याह—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

श्रेष्ठः जात्यादिगुणैरुत्तमः ॥ २१ ॥

इतः परं स्वस्मिन् परमेश्वरस्वरूपताम्भासूत्रयति--

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।**
**नानवाप्तमवाप्तव्यं[1] वर्ते[2]ऽथ च कर्मणि ॥ २२ ॥**

अलब्धलाभार्थी हि सर्वो जनः स्वकार्यार्थं प्रवर्तते । मम तु निजै-
३ श्वर्येण प्राप्तप्राप्यस्य किंचिदप्राप्यं नास्ति । तथापि विहिते कर्मणि
प्रवर्तेऽहम् ॥ २२ ॥

**यद्यहं[3] न प्रवर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते[4] मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

श्रेष्ठैरकृतं दृष्ट्वा तदपि न कुर्वीरन्नित्यर्थः ॥ २३ ॥

ततश्च को दोष इत्याह--

**उत्सीदेयुरमी[5] लोका न कुर्यां कर्म चेदहम् ।**
**संकरस्य च कर्ता स्यामपहन्या[6]मिमाः प्रजाः ॥ २४ ॥**

उत्सीदेयुः सदाचारानवगमात् मात्स्यन्यायेन विनश्येयुः । तथा च
३ वर्णाश्रमधर्माणां मिश्रीभावस्य, मर्यादाया अनियमात्, कर्ता स्याम् ।
अत एव विशृङ्खलीकरणादिना प्रजा उपहन्याम् । ममेश्वरस्यानुग्राहकत्वं
हीयेतेत्यर्थः ॥ २४ ॥

---

१ 'नानुवाप्त॰' इति कलकत्तापाठः ।

२ 'वर्त एव च' इति प्रचलितपाठः, 'वर्तम्येव च' इति तु भास्करपाठः ।

३ 'यदि ह्यहं न वर्तेयं' इति प्रचलितपाठो गोण्डलमातृकायामनुसृतः । 'यद्यहं न प्रवर्तेय' इति भास्करपाठः कलकत्तामातृकायां दृश्यते । 'यदि ह्यहं न वर्तेय' इति रामकविनाभिनवगुप्तेन च स्वीकृतः पाठः ।

४ '॰नुवर्तेरन्' इति काश्मीरटीकान्तरेषु, गोण्डलमातृकायां च पाठः । आनन्दवर्धनानुसृतः प्रचलितपाठः कलकत्तामातृकायां दृश्यते ।

५ प्रचलितपाठः, प्रायः काश्मीरपाठश्च '॰रिमे' इति ।

६ प्रचलितपाठः, प्रायः काश्मीरपाठश्च '॰मुपहन्या॰' इति ।

विद्वदविद्वद्विषयं विशेषं दर्शयति—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथासक्तः चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

फलादिभेदेन कर्मणि सक्ता अविद्वांसो यथा महता प्रयासेन कुर्वन्ति। तथैव विद्वानसक्तोऽपि लोकसंग्रहं चिकीर्षुर्महता प्रयासेन कुर्यादिति नियोजनम् ॥ २५ ॥

अविद्वद्दर्शनमत्र महता प्रयासेन करणे दृष्टान्तमात्राय। यदि चायं कर्म न कुर्यादज्ञानां बुद्धिभेदः, 'अनेन कथं न कृतम्' इति व्यामोहः, स्यादित्याह—

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥

विद्वान् युक्तः, पूर्वोक्ते कर्मयोगे समाहितः, सर्वाणि कर्माणि नियतानि कुर्वाणः, अज्ञानामपरमार्थविदामत एव कर्मसङ्गिनां बुद्धिव्यामोहं भ्रमं न जनयेत्। सर्वकर्माणि जोषयेत्। स्वदृष्टान्तदर्शनेन यथावन्नियतेषु कर्मसु प्रोत्साहयेत्। तदुक्तम्—

हृद्यैः पथ्यैः चिकित्स्यः स्यादातुरो द्वेष्यभेषजः।
यथा तथैव संबोध्यः सुखोपायेन स्वल्पधीः ॥

॥ २६ ॥

अविदुषः कर्मकरणप्रकारदर्शनप्रस्तावेन प्रकृत्यात्मकं पारमेश्वरं स्वरूपं सविकारमुद्दिशति—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

षोडशादारभ्याष्टादशान्तं प्रकृतेर्दैवासुरसर्गविभागेन वक्ष्यमाणैः गुणैः क्रियमाणानि—

---

१ 'भागशः' इति काश्मीरटीकाकृतां तथा गोण्डलकलकत्तामातृकयोः पाठः।

अधिष्ठानं तथा कर्ता करणं च पृथग्विधं ।
६ विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥

इत्यादि(१८।१४)युक्त्या क्रियमाणानि कर्माणि लौकिकानि वैदिकानि
च अहंकारेण सत्त्वाभिभवाद्रजस्तमसोरुद्रेकेण विमूढः, अनात्मनि
९ कार्यकारणसंघाते आत्मबुद्ध्या मोहं प्राप्त आत्मा अन्तःकरणं यस्य
सः, कर्ताहमिति मन्यते । पञ्चकमध्यात् केवलमात्मानं कर्तारं
जानाति ॥ २७ ॥

सात्त्विकास्तु तथा नाभिमन्यन्ते। इत्याह—

तत्त्ववित् तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणार्थे वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥

चतुर्दशात् प्रभृति प्रकरणसमाप्तिं यावत् लक्षिष्यमाणस्य गुणानां
३ सत्त्वादीनां विभागस्य कर्मणः सत्त्वादिकार्यस्य प्रकाशादेश्च विभाग-
वित्, सत्त्वं सुखसङ्गेन बध्नाति (१४।६) इत्यादिविशेषं जानन्।
गुणाः सत्त्वादयो गुणार्थे प्रकाशादौ वर्तन्ते गुणानामेवायं भावः,
६ आत्मनस्तु निर्विकारस्य न किमपीति मत्वा न सज्जते, औदासीन्येन
तिष्ठति। सर्वमिदं चतुर्दशे गुणातीतलक्षणे प्रादुर्भावयिष्यति भगवान्
स्वयम् ॥ २८ ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥

प्रकृतेर्गुणैः, सात्त्विकराजसिकतामसिकत्वैः, संमूढा मिथ्याज्ञानात्
स्वात्मनि कर्तृत्वाभिमानिनः गुणकर्मसु सज्जन्ते । सुखाद्याशया विष-
३ येभ्यः स्पृहयन्ति । तानकृत्स्नविदः अनात्माभिमानिनः, मन्दान् पर-
मार्थं ज्ञातुमशक्तान्, कृत्स्नवित् तत्त्वदर्शी, न विचालयेत्। तेषां
लोकानामविदुषां संग्रहार्थं स्वयं नियतं कर्म कुर्वाणस्तानपि कारयेत्,
६ यथा नैते तत्त्वज्ञानस्य नैष्कर्म्यदर्शनान्निष्कर्मीभूय पतिताः स्युरि-
त्यर्थः ॥ २९ ॥

---

१ 'गुणेषु' इति प्रचलितपाठः, कलकत्तामातृकायां तथा भास्करटीकायां
दृश्यते ।

एवं नियतस्य कर्मणोऽवश्यंकरणीयतां प्रतिपाद्य प्रकृतेऽर्थे नियोजयति--

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

मयि परमात्मनि वासुदेवे सर्वाणि कर्माणि, अध्यात्मचेतसा वक्ष्यमाणब्रह्मार्पणयुक्त्या, संन्यस्य सम्यक्तया न्यासं निक्षेपमिव स्थापयित्वा, अक्षयं मोक्षं प्राप्स्यन्, निराशीः फलस्पृहाहीनः, निर्ममः त्यक्तकर्तृत्वाभिमानः अत एव विज्वरः त्यक्तशोकमोहः, युध्यस्व । इत्थमेव चेतसा मयि सर्वकर्माणि संन्यस्येत्यष्टादशे ( श्लो० ५७ ) सिद्धान्तयति ॥ ३० ॥

उपसंहरति--

ये मे मतमिदं नित्यमनुवर्तन्ति[1] मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः[2] ॥ ३१ ॥

ये विद्वांसः मे परात्मनः प्रजापतेरिदं मतम्, अविदुषा विदुषा वा स्वार्थं लोकसंग्रहार्थं नियतं कर्म अवश्यं कार्यमित्युपदेशम्, अनुतिष्ठन्ति । ते श्रद्धावन्तः श्रेयःप्राप्तौ निश्चयवन्तः, अनसूयन्तः नियते जातिधर्मे यज्ञादौ हिंसादिदोषाननाविर्भावयन्तः, तैः सर्वैः किल्बिषैः पापैः बन्धकैरैहिकैः पारलौकिकैश्च वा कर्मफलैर्मुच्यन्ते, श्रेयः प्राप्नुवन्ति ॥ ३१ ॥

अत्र व्यतिरेकमुखेन दोषमाह--

ये त्वेतदभ्यसूयन्तो नानुवर्तन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः[3] ॥ ३२ ॥

---

१ '०मनुतिष्ठन्ति' इति प्रचलितपाठः कलकत्तामातृकायामेव दृश्यते ।

२ 'मुच्यन्ते तेऽपि कर्मभिः' इति प्रचलितपाठः । 'ते विमुच्यन्ति कर्मभिः' इति तु भास्करपाठः ।

३ चतुर्थचरणस्य भास्कररामकविपाठः 'विनष्टान् विद्ध्यचेतसः' इति । स एव गोण्डलमातृकायामपि ।

सर्वेषु ज्ञानेषु हेयोपादेयनिश्चयेषु विमूढान् विपर्यस्तान्, अत एवाचेतसः चैतन्यशून्यान् नष्टान् निरयगामिनो विद्धि ॥ ३२ ॥

कथं नानुतिष्ठन्ति इत्याशङ्कापरिहारपूर्वं कर्मणां त्यागानुपपत्तिमेव स्थिरयति--

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

ज्ञानवानपि 'इदं मया कार्यमिदं न कार्यम्' इति व्यवस्यन्नपि, स्वस्याः प्रकृतेः सात्त्विक्या राजस्यास्तामस्या वा सदृशं,-- प्रवृत्तिं च निवृत्तिं च कार्याकार्ये (१६ । ७)—इत्यादिवक्ष्यमाणस्वभावानुरूपं, चेष्टते व्यवहरति । यतो भूतानि प्राणिनः, प्रकृतिं स्वं स्वभावमेव, यान्ति । निग्रहोऽनुशासनं सदुपदेशः, किं करिष्यतीति मम मतानुष्ठाने हेतुः । अथ च 'न योत्स्यामीति' ज्ञानवान् कृतव्यवसायोऽपि भवान् स्वस्याः प्रकृतेः क्षत्रियजातेः सदृशं चेष्टते, युद्धमनुतिष्ठत्येव, यतो भूतानि प्रकृतिं यान्ति । निग्रहो हठः किं करिष्यति, व्यर्थ एवेति । अयमुद्देशः-- 'अथ चेत् त्वमहंकारान्न श्रोष्यसि' इत्यादेः (१८।५८) सिद्धान्तयिष्यमाणस्योपदेशस्य विहितः ॥ ३३ ॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

अत्रेदं तात्पर्यम् । तव हि भिक्षाचरणे रागः, युद्धकरणे तु द्वेषः, तयोर्वशो मा भव । तौ हि तव श्रेयःप्राप्तिनिरोधकाविति ॥ ३४ ॥

एतदेवोपदिशति--

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

---

१ चतुर्थचरणस्य काश्मीरपाठः प्रायः 'परधर्मोदयादपि' इति वर्तते ।

अत्राप्ययमभिप्रायः । स्वधर्मः स्वजातिविहितः तव क्षत्रियस्य धर्मो युद्धकरणं, विगुणः बन्ध्वादिहननेन विरुद्धगुणोऽपि, सुखसाध्यमनुष्ठितमनुष्ठानं यस्य ईदृशात् परधर्मादर्थतो भिक्षाचरणात् सकाशात् श्रेयानतिप्रशस्तः । तथाहि— 'यद्वा जयेम यदि वा नो जयेयुः' इति (२।६) स्वधर्मे युद्धे आशङ्कितं निधनं मरणं श्रेयः निश्रेयसकारणमित्यर्थः । परस्य भिक्षोः धर्मः भिक्षाचरणं भयावहः श्रेयःप्राप्तौ प्रत्यवायभूतः, विहितस्यावश्यकस्य कर्मणस्त्यागादित्यर्थः । तथा चैतस्योद्देशस्य सिद्धान्तोऽग्रे दर्श्यते ॥ ३५ ॥

त्वया रागद्वेषौ परिपन्थिनौ प्रोक्तौ तयोः कुत उत्पत्तिरिति—

अर्जुन उवाच ।

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

अथ यद्येवं स्वधर्मादुदयः परधर्मादनुदयः इति ज्ञात्वा पुरुषोऽनिच्छन्नपि बलादिव व्यापारितः, केनायं प्रेरितः, पापमेव कुरुते कुकर्मैवाचरति ॥ ३६ ॥

अत्रोत्तरं—

श्रीभगवानुवाच ।

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

एष प्रोच्यमानस्वरूपः कर्ताहमित्यभिमानस्वरूपोऽहंकारः एव कामः, प्रेप्सिते वस्तुनि संकल्पो इदं मे भूयादिति । रागो रजोगुणात् चित्तचञ्चलत्वादुत्पन्नोऽस्ति । तथा रजोगुणसमुद्भव एषोऽहंकार एव प्राप्तस्य कामस्य कुतश्चित् प्रतिघातात् क्रोधः चित्तज्वलनरूपो भवति । एष कीदृशः, महाशनः उत्तरोत्तरवर्धमानैर्विषयभोगैरतृप्तः, महापाप्मा सर्वव्यसनहेतुः, इह ज्ञानात्पत्तौ, वैरिणं विद्धि । अस्योद्देशस्य विस्तरोऽग्रे ॥ ३७ ॥

---

१ 'आक्रम्यैव' इति रामकविपाठः, 'आक्रम्येव' इति भास्कराभिनवगुप्तटीकयोः, गोण्डलमातृकायां च ।

अथास्य स्वरूपं जिज्ञासुः—

अर्जुन उवाच ।

**भवत्येष कथं कृष्ण कथं चैव विवर्धते ।**
**किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छतः ॥ ३८ ॥**[1]

॥ ३८ ॥

एतत्प्रश्नचतुष्टये क्रमेणोत्तरं—

श्रीभगवानुवाच ।

**एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह ।**
**सुखतन्त्र इवासीनो मोहयन् पार्थ तिष्ठति ॥ ३९ ॥**

एषोऽहंकारः सूक्ष्मः, इन्द्रियाणि पराणि इत्युच्यमानाश्रयमुखेन दुर्लक्ष्यः,
३ परः शत्रुः देहिनामिन्द्रियैः सहितः, सुखतन्त्र इवासीनः, क्रोधेन दुःख-
त्वेऽपि रागेण केवलेन सुख इवोपविष्टः, मोहयन् अनात्मनि देहादा-
वात्मबुद्धिं जनयंस्तिष्ठति । कथं भवतीत्युत्तरमिदम् ॥ ३९ ॥

**कामक्रोधमयो घोर[ः] स्तम्भहर्षसमुद्भवः ।**
**अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ४० ॥**

कामक्रोधमयः कामक्रोधाभ्यां परस्परमव्यभिचाराद्बहुलः घोरः
पर्यन्ते भयकृत् । स्तम्भान्मिथ्योच्छ्रायबुद्धेः हर्षाद्विषयप्रमोदेन निरङ्कु-
३ शत्वाच्च समुद्भवो वृद्धिर्यस्य । अभिमानः, अतस्मिंस्तन्मतिर्मिथ्याज्ञानं,
स आत्मा स्वरूपं यस्यायमहंकारः । पापकर्मभिस्त्यक्तशास्त्राचारैः
समुद्र इव दुस्तरः । कथं वर्धते इत्युत्तरम् ॥ ४० ॥

**हर्षमस्य निवर्त्यैव शोकमस्य ददाति च ।**
**भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४१ ॥**

अस्य देहिनः मुहुर्मुहुर्मोहयन्नेषोऽहंकारः, हर्षाय कामप्रवृत्तस्य तं हर्षं निवर्त्य, केनचिदभिघातेन दूरीकृत्य, कथंचित् प्राप्तमपीदं नष्ट-

---

१ श्लोकाः ३८–४२ काश्मीरपाठे एव वर्तन्ते । तत्र मातृकासु वर्तमानाः सूक्ष्माः पाठभेदा नात्र सर्वे प्रदर्शिताः ।

२ 'दुःसहः' इति कलकत्तामातृकायां पाठः ।

३ मिति शोकं च ददाति। अत एव शत्रुरस्य भयं च करोति।
'किमाचारः' इत्युत्तरम् ॥ ४१ ॥

स एष कलुषः[1] क्षुद्रश्छिद्रान्वेषी धनंजय।
रजःप्रवृत्तो मोहात्मा मानुषाणामुपद्रवः ॥ ४२ ॥

स एषोऽहंकारः कलुषो दोषकारित्वादाविलस्तमोरूपत्वात् क्षुद्रोऽधर्मः, छिद्रान्वेषी दोषावकाशं दृष्ट्वैव अन्तः प्रविश्य सद्यो हन्ता,
३ मोहोऽन्यथाज्ञानरूपः मानुष्याणामुपद्रवः ॥ ४२ ॥

उपद्रवत्वमुपमया आह—

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथानेनायमावृतः[2] ॥ ४३ ॥

अनेनाहंकारेणायमात्मा आवृतस्तिरोहितः ॥ ४३ ॥

ज्ञाता सन्नात्मा कथमावृत इत्याह—

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ४४ ॥

एतेनाहंकारेण कामरूपेण मायाविनेव स्वेच्छाकृतनानारूपेण तृष्णारू-
३ पेणात एव दुष्पूरेण—

तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते।
या महद्भिरपि क्षिप्तैः पूरणैर्नैव पूर्यते ॥

६ इत्यादिस्मरणात् पूरयितुमशक्येन अत एव सर्वभक्षत्वात् दाहक-
त्वाच्चानलेनाग्निना, नित्यवैरिणा ज्ञानिनो ज्ञानगुणस्यात्मनो ज्ञान-
माच्छादितम् ॥ ४४ ॥

---

१ 'कलुषी' इत्यभिनवगुप्तपाठः।

२ 'तथा तेनेदमावृतम्' इति चतुर्थचरणस्य प्रचलितपाठः। 'तथानेन' इतिस्थाने 'तथा तेन' इति प्रायः काश्मीरपाठः।

किमाश्रित्य आवृतमित्याह—

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४५ ॥

आदौ सुवर्णादिकं चक्षुरादीन्द्रियं विषयीकरोति, तदनु मनसा
३ ग्रहीतुं संकल्पते, ततो ग्राह्यमिदमिति बुद्ध्या विचार्य गृह्णात्येव । इति
क्रमेण ज्ञानमावृत्य तैरिन्द्रियादिभिर्देहिनमात्मानमेषोऽहंकारो मोह-
यति ॥ ४५ ॥

तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम् ॥ ४६ ॥

गुरुशास्त्राद्युपदेशात् तत्त्वावबोधो ज्ञानं, स्वात्मना साक्षात्कारो विज्ञानं, तयोर्नाशनमेनमहंकारं प्रजहीहि ॥ ४६ ॥

अयमतिसूक्ष्मत्वेन दुर्ज्ञेयो मायावी शत्रुर्दृढावधानेन जेय इत्याह—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४७ ॥

३ इन्द्रियाणि चक्षुरादीनि, पराणि स्थूलस्य देहस्य प्रेरकाणि, विषयोपल-
ब्धिद्वारेणैवोपलक्ष्यत्वान्न साक्षाद्दृश्यानि सूक्ष्माणीत्यर्थः । इन्द्रिये-
भ्योऽपि परं सूक्ष्मं मनः, इन्द्रियाणां प्रेरकमणुत्वाच्चञ्चलत्वाच्च ।
६ मनसोऽपि परा सूक्ष्मा दुर्लक्ष्या मनः प्रेरयन्ती बुद्धिरध्यवसाया-
त्मिका । एवं बुद्धेरतिसूक्ष्मायाः यः परः प्रेरकः, उत्तरोत्तरापेक्षया
नितरां सूक्ष्मो दुर्विज्ञेयश्च, यः कश्चित्, सोऽहंकार इत्यन्वयः ॥ ४७ ॥

उपसंहरति—

एवं बुद्धेः परं मत्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४८ ॥

---

१ 'प्रजहिह्येनं' ( किंवा 'प्रजहि ह्येनं') इति गोण्डलमातृकायाम् ।
२ 'बुद्ध्वा' इति प्रचलितपाठः, काश्मीरपाठश्च ।

एवं बुद्धेः परं दुर्लक्ष्यमबुद्धिगोचरमहंकारं मत्वा, आत्मना स्वयमेवात्मानं मनः संस्तभ्य विषयेभ्यो निर्वर्त्य, शत्रुमहंकारं, कामरूपं दुर्लक्षं नानारूपम्, अत एव दुरासदं जहि । महाबाहो इत्यामन्त्रणेनेदं ध्वनितं, यथा कामरूपा मायया नानारूपं कुर्वाणा अत एव दुरासदा निवातकवचादयः शत्रवः इन्द्राद्यैरपि दुर्जयास्त्वया हताः, तथैनमहंकारमपि जहीति । क्षत्रियत्वधर्मे उत्साहो[1]ऽत्र वर्धितः ॥ ४८ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
तृतीयोऽध्यायः ॥ ३ ॥

---

१ मातृकायां 'उत्साहो ह' इति पठितम् ।

## ॥ चतुर्थोऽध्यायः ॥

तदेवं पूर्वस्मिन्नध्यायद्वये कालपुरुषप्रकृतीनां प्रकृतिविकृतीनामहंकारादीनां च सामान्यतः स्वरूपोद्देशपूर्वं ज्ञानकर्मसमुच्चयेनैव श्रेयःप्राप्तिः, न तु विहितकर्मत्यागेन ज्ञानमात्रात् [ इति ] प्रतिपादितम् । अथात्र चतुर्थेऽध्याये परमेश्वरस्वरूपोद्देशपूर्वं ज्ञानकर्मसमुच्चयमेव प्रतिपादयितुं—

श्रीभगवानुवाच ।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

इमं प्रोक्तपूर्वं योगं, ज्ञानकर्मसमुच्चयात्मिकां युक्तिं, अव्ययमव्ययस्य मोक्षस्य कारणत्वेनाक्षयम्, अहं परमात्मस्वरूपः प्रोक्तवान् ॥ १ ॥

एवं परंपराख्यातमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥

राजर्षयः स्वयमनुष्ठाय परैरप्यनुष्ठापयितारः । सः सत्त्वैकनिष्ठपुरुषानुष्ठेयो योगः, इहास्मिन् लोके, महता कालेन त्रेतादौ सत्त्वादीनां गुणानामन्योन्याभिभवजननमिथुनवृत्तिक्रमेण पुरुषबुद्ध्यपचयान्नष्टोऽन्तर्भूतः । तथा चोदयनः—

जन्मसंस्कारविद्यादेः शक्तिस्वाध्यायजन्मनोः ।
ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयते ॥

इति ॥ २ ॥

---

१ सांख्यकारिका १२ ।

२ न्यायकुसुमाञ्जलि, २ । ३ । तत्र '॰जन्मनोः' इतिस्थाने '॰कर्मणो' इति पाठः ।

स एवांयं मया तेऽद्य योगः प्रोक्तः पुरातनंः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तंमम् ॥ ३ ॥

स एवायं विवस्वते प्रोक्तो मध्ये लीनोऽपि मया, आदिविदुषा पुरातनेन परमेश्वरेण । पुरातनः, प्रोक्तात् स्वरूपादुत्कृष्टः, न त्वद्यत्व संभावनामात्रार्थमेवोक्तः, योगस्ते प्रोक्तः । अत्र हेतुमाह—भक्तोऽसि मे सखा चेति, तवोपदिष्टः । हि यस्मादेतन्मदुक्तमुत्तमं रहस्यं यस्यकस्यचिद्वाच्यं नास्ति । स्वधर्मत्यागोन्मुखस्य तवाधर्मनिवारणार्थं प्रेमातिशयादुक्तमित्यर्थः ॥ ३ ॥

अत्र परमेश्वरस्वरूपानभिज्ञः भगवतः इदंजन्मापेक्षया पूर्वापरविरोधं पश्यन्—

अर्जुन उवाच ।

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतंद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

अपरमर्वाचीनमिदानींतनं भवतो जन्म, विवस्वतः परं सर्गादिकालीनम् ॥ ४ ॥

आत्मनोऽनादित्वं सर्वज्ञत्वं सर्वकर्तृत्वं सर्वशक्तिमत्त्वमीश्वरस्वरूपमर्जुनं प्रति प्रकाशयन्—

श्रीभगवानुवाच ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद्मिं सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

तानि तव चात्मनश्च भूतानि जन्मान्यहमनादिः सर्वज्ञो जानामि ।

---

१ 'स एव च मया' इति भास्करपाठः ।
२ 'सनातनः' इति भास्करपाठः ।
३ 'चैतदुत्तमम्' इति रामकविपाठः ।
४ 'कथमेवं' इति काश्मीरटीकासु पाठः ।
५ 'वेद' इति प्रचलितपाठः, प्रायः सर्वत्र काश्मीरपुस्तकेषु ।

त्वं तु न वेत्सि। यद्यज्ञासिष्यो नैतदवस्थोऽभविष्य इत्यर्थः। अत एव परंतपेति सोत्प्रासम् ॥ ५ ॥

कथं पुनरीदृशः सन् पुनः पुनर्जायसे इत्याशङ्कामपाकुर्वन्नाह—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

अजोऽपि सन्ननुत्पाद्योऽपि सन्, अव्ययो नाशहीन आत्मा स्वरूपं यस्येदृशोऽपि सन्, भूतानां सर्वेषामुत्पत्तिमतामीश्वरो निग्रहानुग्रहशक्तोऽपि सन्, धर्माधर्मोपभोगोपर[त]तया यद्यपीदंशरीरत्यागः परशरीरग्रहणं च नास्ति, तथापि स्वात्मनो मायया, अतिदुर्घटकारिण्या मदभिन्नया पारमैश्वर्यशक्त्या परानुजिघृक्षारूपया, स्वां स्वोपभोगस्थानप्रकृतिं विस्तरेणाग्रे लक्षयिष्यमाणामपरात्मिकाम्, अधिष्ठाय आश्रित्य, संभवामि प्रादुर्भवामि ॥ ६ ॥

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति संप्रदायप्रद्योतनार्थमात्मनः शरीरग्रहणमुपपादयति—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥

आत्मानं शरीरं सृजामि गृह्णामि। तदुक्तं पुराणेषु—

नाकारणात् कारणाद्वा कारणाकारणान्न च।
शरीरग्रहणं व्यापिन् धर्मत्राणाय केवलम् ॥

इति ॥ ७ ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

अत्र परानुग्रहार्थं चेत् पारमेश्वरी प्रवृत्तिः, तत् केन नामायं ममतां विना मेऽनुग्रह इति विचारो लिखित एवोपोद्घाते ॥ ८ ॥

---

१ 'तदात्मांशं' इति प्रायः काश्मीरपाठः।

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

एवं परानुग्रहार्थमेव दिव्यमद्भुतं मन्दबुद्धिभिरसंभाव्यम्, न तु सामान्यजनवद्धर्माधर्मपारतन्त्र्येणेर्ष्यारागबहुलम्, इति यः तत्त्वतः परमार्थतो वेत्ति स इदंशरीरपातादनन्तरं मत्सायुज्यं प्राप्नोतीत्यर्थः ॥ ९ ॥

एवं परमेश्वरस्वरूपमुद्दिश्य प्रकृतं ज्ञानकर्मसमुच्चयमेव लक्षयति—

वीतरागभयक्रोधा मन्मया मद्व्यपाश्रयाः[1] ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

वीतः विगतः रागो विषयाभिलाषो रजोगुणकार्यं, भयं तद्विघातकेभ्यस्त्रासो रजस्तमसोः कार्यं, क्रोधः विघातकप्रतीकाराय चित्तज्वलनं, येभ्यस्ते सत्त्वस्थाः । तथाहमेव व्यपाश्रयो विशिष्टोऽपाश्रयः स्थितिहेतुर्येषां ते । बहवः ज्ञानतपसा ज्ञानसमुच्चितेन तपसा कर्मणा पूताः क्षीणकल्मषाः, मद्भावं मत्सायुज्यमागताः । तपःशब्दोऽत्र कर्मार्थवाचकः । ज्ञानसमुच्चितं च तत् तपः ज्ञानतप इति मध्यमपदलोपः समासः ॥ १० ॥

वीतरागेष्वेव यदि त्वं सायुज्यप्रदो नेतरेष्विति वैषम्यप्रवृत्तिशङ्कां प्रकारान्तरेणापनयति—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

ये स्वर्गादिकामफलार्थं मां प्रपद्यन्ते तांस्तथैव भजामि स्वीकरोमि, स्वर्गादिफलभागिन एव करोमि । ये तु मोक्षार्थिनस्तान् मोक्षभागिन एव करोमि । हे पार्थ सर्वशः सर्वे एव लोकाः, भोगार्थिनो मोक्षार्थिनो वा, ममैववर्त्मानुवर्तन्ते, मत्कृतमेव मार्गमनुगच्छन्ति । प्रवृत्तिमार्गो निवृत्तिमार्गश्च मयैव दर्शितः ॥ ११ ॥

---

१ 'मामुपाश्रिताः' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते ।

तत्र प्रवृत्तिमार्गमेव तावत् प्रपञ्चयति—

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

इह कर्मभूमौ भारते वर्षे, कर्मणां सिद्धिं भोगापवर्गरूपां काङ्क्षन्तः, भोगार्थिनो मोक्षार्थिनो वा, देवताः श्रुतिमन्त्रोपदिष्टान् मदंशानिन्द्रादीन्, मामेव परमेश्वरं वा यजन्ते । हि यस्मान्मानुषे लोके कर्मणः सकामान्निष्कामाद्वा जाता सिद्धिः क्षिप्रं भवति ॥ १२ ॥

सर्वे श्रेयःप्राप्तये त्वामेव कथं न यजन्त इत्याह—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः[1] ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

मयेश्वरेण गुणैः सत्त्वादिभिः कृतो यः कर्मणां ब्राह्मणत्वादिजात्याश्रयत्वाद्विभागः, विस्तरादग्रे लक्षयिष्यमाणः, तेन गुणकर्मविभागेन चातुर्वर्ण्यं सृष्टमित्यत एव निजनिजप्रकृत्यनुरूपं तत्तदर्थनया देवता जायन्ते इत्यर्थः । अत्रापि त्वत्कृतमेवेदं वैषम्यमित्याह । तस्येत्थं सर्गस्य कर्तारमपि मां परमेश्वरमकर्तारं, तत्कर्तृत्वसंबद्धं फलमनाश्रयन्तं, विद्धि । अनयोक्त्या स्वात्मनः क्लेशकर्मविपाकाशयैरपरामर्शो[2] वर्णितः ॥ १३ ॥

कथमेतदित्याह—

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा[3] ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

यतो मे कर्मणां फलेषु कामः स्पृहा नास्ति । ततो मां कर्माणि न लिम्पन्ति, अतोऽहं कृत्वाप्यकर्तैवेत्यर्थः । प्रत्यक्षं ह्येतद्याज्ययज्वनोः । तदेवं सर्वमीश्वरलक्षणमात्मानि प्रकाश्य प्रकृते कर्मणि पार्थस्य श्रद्धां जनयति । इतीत्थंप्रकारेण यो मां सर्वज्ञं सर्वकर्तारं सर्वानुग्राहकं मां

---

१ ‘०विभागशः’ इति प्रचलितपाठः ।

२ द्रष्टव्यं पातञ्जलयोगसूत्रम्, १ । २४ ।

३ ‘कर्मफले स्पृहा’ इति प्रचलितपाठः ।

परमेश्वरमभिजानाति, ज्ञानेन साक्षात्करोति। स कर्मभिः क्रियमाणैर्न बध्यते। ज्ञानपूर्वं क्रियमाणं हि कर्म न बन्धकमित्यर्थः ॥ १४ ॥

एवमीश्वरोद्देशमुपसंहृत्य कर्तव्यसिद्धान्तमाह—

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात् त्व पूर्वैः पूर्वतरैः[1] कृतम् ॥ १५ ॥

स्पष्टम् ॥ १५ ॥

अथ भेदेन कर्म लक्षयति—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।
तत् ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥

अशुभात् कर्मबन्धनात् ॥ १६ ॥

कर्मणोऽपि[2] हि बोद्धव्यं बोद्धव्यं च विकर्मणः।
अकर्मणोऽपि बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

कर्माकर्मविकर्मेति त्रिविधं हि कर्म। तत्र कर्मणः, वर्णाश्रमधर्मत्वेन श्रुतिस्मृतिविहितस्य नित्यस्य कर्मणो, बोद्धव्यं स्वरूपं विचार्यम्। विकर्मणः, श्रुतिस्मृतिनिषिद्धस्य परिहरणीयस्य च कर्मणः, स्वरूपं बोद्धव्यम्। अकर्मणः, विहितनिषिद्धाभ्यां कर्मभ्यामितरस्य काम्यस्य च कर्मणः, स्वं रूपं बोद्धव्यमिति 'अब्राह्मणमानय' इतिवन्नात्र समासार्थः। अथ वा कर्मणामभावोऽकरणम्। तस्मादकर्मणः कर्मसंन्यासस्य स्वरूपं बोद्धव्यम्। यतः कर्मणो गतिर्गहना दुर्ज्ञेयास्ति ॥ १७ ॥

बोद्धव्यप्रकारमेवाह—

कर्मण्यकर्म यः पश्येद[3]कर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स चोर्क्तः[4] कृत्स्नकर्मकृत् ॥ १८ ॥

---

१ 'पूर्वतरं' इति प्रचलितपाठः। स एव च प्रायः काश्मीरपाठः।

२ 'ह्यपि' इति प्रचलितपाठः।

३ 'पश्यत्यकर्मणि' इति प्रायो भास्करवर्जं काश्मीरपाठः।

४ 'स युक्तः' इति प्रचलितपाठः।

क्रियया प्राप्तुमिष्टं कर्म । कर्मणि स्वजातिविहिते नियतेऽवश्यकरणीये अकर्म नित्यनैमित्तिकयोरभेदेन फलाग्रहणादबन्धकत्वं यः पश्येद्विचारयेत् । एवं विकर्मणि कर्मणो विपरीते निषिद्धे कर्मणि कर्मबन्धकत्वं यः पश्येत् । तथैवाकर्मणि विहितनिषिद्धाभ्यामितरस्मिन् काम्ये कर्मणि कर्मस्वभावं बन्धकत्वं यः पश्येत् । एवमकर्मणि कर्मणामकरणे संन्यासे कर्मप्रत्यवायफलदत्वं यः पश्येत् । स मनुष्याणां मध्ये बुद्धिमान् ज्ञानवानुक्तः, स च कृत्स्नस्य संपूर्णपुरुषार्थसाधकस्य कर्मणः संपाद उक्तः । तथा च विस्तीर्य लिखितमिदमुपोद्घाते ( पृ० ४ ) । 'अविद्यया मृत्युं तीर्त्वा' इत्यादिश्रुतिषु । 'विहिताकरणात् पुंभिः' इत्यादिस्मृतिषु ( पृ० ८ ) । तथा—

यानि कर्माणि काम्यानि प्रतिषिद्धानि यान्यपि ।
तानि बध्नन्त्यकुर्वन्तं नित्यनैमित्तिकान्यपि ॥

इति वैशेषिकप्रमाणोपपत्तौ ( पृ० १० ) ॥ १८ ॥

एतदेव स्फुटयति—

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

समारभ्यन्त इति समारम्भाः कर्माणि कामभोगस्तेषु संकल्पाः प्राप्तुमिच्छा तेन वर्जिताः । ज्ञानाग्निना दग्धानि संसारप्रसवासमर्थानि कृतानि कर्माणि येन तं पण्डितं कर्मण्यकर्मवेत्तारमाहुः ॥ १९ ॥

एतदेव हृदये संनिवेशयितुं पुनराह—

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित् करोति सः ॥ २० ॥**

कर्मफलस्पृहात्यागेनैव स्पृहणीयाभावान्नित्यतृप्तः । निराश्रयः स्वर्गादिफलसाधनभूताज्ज्योतिष्टोमादेराश्रयान्निर्गतः । कर्मणि नियते आवश्यके प्रवृत्तोऽपि नैव किंचित् करोति बन्धकस्य फलस्याग्रहणात् ॥ २० ॥

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

इदं मे भूयादिदं माभूयादिति रागद्वेषपूर्विकाया आशिषः प्रार्थनाया निर्गतो निराशीः, अत एव यतौ निरुद्धौ चित्तमात्मा शरीरं च यस्य सः। चित्तं हि पूर्वं वस्त्वभिलषति, ततः शरीरं चेष्टते, तथा नायमिति। इत्थं केवलं रागद्वेषाभ्यां विना शारीरं शरीरनिर्वर्त्यं दर्शनस्पर्शनादिकं शरीरस्थितिं चाशनादिकं च कुर्वन् किल्बिषं नाप्नोति। इति ॥ २१ ॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥

यदृच्छालाभः प्रार्थनां विना वस्तुप्राप्तिः ॥ २२ ॥

एवं कर्मण्यकर्म यः पश्येदित्येतन्निर्णीय कर्मलक्षणमारभते—

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायारभतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

यज्ञायेश्वरार्थं वक्ष्यमाणनीत्या कर्मारभतः समग्रं कर्म प्रविलीयते। 'कर्म ब्रह्मोद्भवं विद्धि' (३।१५) इत्युपदिश्यमाने परमकारणे प्रकर्षेणाक्षयस्य मोक्षस्योत्पादनद्वारेण लीनं भवति। न तु— 'च्छिन्नाभ्रमिव नश्यति' (६।३८) ॥ २३ ॥

यो यत्कार्यः स तत्रैव लीयते, इति प्राप्ते कर्मणो ब्रह्मात्मत्वं दर्शयति—

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

ब्रह्मणे ब्रह्मस्वरूपायै संप्रदानभूतायै देवतायै अर्पणं यस्येदृशं हविराज्यतिलादिकं हवनीयद्रव्यं ब्रह्म. ब्रह्मस्वरूपं सत्। ब्रह्माग्नौ ब्रह्मात्मके एवाग्नौ श्रौते स्मार्तेवाधिकरणे। ब्रह्मणा ब्रह्मात्मकेनैव मन्त्रेण करणेन। हुतं यजमानर्त्विगादिभिर्ब्रह्मात्मकैः कर्तृभिर्हवनक्रियाकर्मतामापादितम्। तेनेत्थंभूतेन हुतेन हवनक्रियया। ब्रह्मकर्मसमाधिना, ब्रह्मात्मके कर्मणि समाधिः सर्वेषु कारकेषु ब्रह्मबुद्धिस्थैर्यं यस्येदृशेन पुरुषेण, ब्रह्मैव गतव्यं प्राप्यं क्रियाफलम्। अत्रैष

वाक्यार्थः । सर्वेषु क्रियाकारकेषु ब्रह्मणो व्याप्तिज्ञानेनाहं ब्रह्मास्मीति भावितात्मा अनयैव भावनया कर्म कुर्वाणः, मोक्षमाप्नोतीति ॥ २४ ॥

अथ नानाविधभावनाभेदेन पुंसां यज्ञभेदान् ब्रह्मार्पणप्रकरणानेवोपदिशति—

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

दैवं हिरण्यगर्भादित्यादिदेवोपासनं यज्ञमपरे योगिनः कर्मयुक्तिज्ञा बाह्यद्रव्यैराज्यतिलादिभिः पर्युपासते । तत् तेषां फलनिस्पृहाणां तत्तदुपासनया तदेकात्मतां प्राप्तानां पर्यन्ते हिरण्यगर्भादीनामधिकारक्षये तैः सह ब्रह्मप्राप्तिरिति सिद्धमेव । अपरे बाह्यद्रव्याणामसंपत्तिदर्शिनः यज्ञेनैव बाह्ययज्ञोपकरणक्रमेणैव यज्ञं विष्णुं ब्रह्माग्नौ ज्ञानाग्नौ मानसिकयागविधिना जुह्वति समुपासते । स्फुटो हि मनोयागस्तत्र तत्र तन्त्रेषु ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति
शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

अन्ये ब्रह्मचारिणः श्रोत्रादीनीन्द्रियाणि संयमाः विषयनिवृत्तयः एवाग्नयस्तेषु जुह्वति । तथा च स्मृतौ ब्रह्मचारिधर्माः ( म० स्मृ०, अ० ३, श्लो० १९२ )—

शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥

इत्यादि । अन्ये गृहस्थाः शब्दादीन् विषयानिन्द्रियाग्निषु जुह्वति । शास्त्रोक्तिक्रमेण रागद्वेषविनाकृता विषयैरिन्द्रियांस्तर्पयन्ति । गृहस्थानां स्त्रीसेवादिपूर्वं विषयोपभोगः स्मृत एव बहुस्मृतिषु ॥ २६ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

अपरे वानप्रस्थाः, सर्वाणीन्द्रियकर्माणि बुद्धीन्द्रियाणां रूपादि-

१ 'समुपासते' इति [illegible] काश्मीरपाठः ।

ग्रहणानि, कर्मेन्द्रियादीनां वचनादीनि, प्राणानामाभ्यन्तराणां पञ्चानां वायूनां कर्माणि भुक्तस्याहारस्य रसादीनां सर्वतः संचरणादीनि, आत्मनः संयमेन ध्यानधारणासमाधिरूपेण संयमः, योगश्चित्तवृत्तिनिरोधः, पतञ्जलिप्रोक्तः (पा० १, सू० २), स एवाग्निस्तस्मिन्, ज्ञानदीपिते ब्रह्मकर्मसमाधिसिद्धे जुह्वति ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

अपरे वानप्रस्थाः—

वैतानिकं च जुहुयादग्निहोत्रं यथाविधि ।

इत्यादि स्मृत्यनुगमात् सपत्नीका वने वसन्तः द्रव्ययज्ञाः पुरोडाशादिभिरग्निं तर्पयन्तः । तपोयज्ञाः—'चान्द्रायणैर्नयेत् कालम्' इत्यादिस्मृतेः (± म० स्मृ० ६।२०) तपःसाध्यो यज्ञो येषां ते । तथा योगेऽष्टाङ्गश्चित्तवृत्तिनिरोधोपायस्तेन साध्यो यज्ञो येषां ते । आत्मसंयमयोगाग्नौ जुह्वतीति पूर्वेणान्वयः । अनेन वाक्यद्वयेन—

सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् ।

इति[2] । द्वयोरेव वानप्रस्थयोर्ज्ञानकर्मसमुच्चयो लक्षितः । एवं यतीन् प्रत्याह—स्वाध्यायज्ञानयज्ञाश्चेति । आत्मसंयमयोगाग्नौ जुह्वतीत्यादि पूर्वेणान्वयः । अपरे चतुर्थाश्रमिणः । संशितं तीक्ष्णं कृच्छ्रसाध्यं व्रतं येषां ते । स्वाध्यायः प्रणवजपः, ज्ञानं परमात्मज्ञानं च यज्ञे आवश्यकं कर्म येषां ते । आत्मसंयमयोगाग्नौ ज्ञानदीपिते जुह्वतीत्येषामपि ज्ञानकर्मसमुच्चयो दर्शितः । स्मृतिश्चात्र (± मनु०, २।८३)—

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
उपवासात् परं भैक्ष्यं दया दानाद्विशिष्यते ॥

इति । अस्यार्थः । यतः एकं प्रणवाख्यमक्षरं ब्रह्मणः सर्वस्माद्वेदराशेः परमुत्कृष्टम् । यतश्च प्राणायामस्तपसः कृच्छ्रचान्द्रायणादेः परम् । यतश्च भैक्ष्यमुपवासादनशनात् परम् । यस्माद्दया दानात् सर्वेभ्यो

---

१ मनुस्मृति, ६ । ९ ।

२ याज्ञवल्क्यस्मृति, ३।४५ ।

दानेभ्यः परं विशिष्यते । तस्माद्यतिः प्रणवजपं प्राणायामं भिक्षाचर्यं च सततमावश्यकं कर्मानुतिष्ठेदिति ॥ २८ ॥

तदेवं चतुर्णामप्याश्रमिणां बाह्येन शारीरेण च यज्ञादिकर्मणा ज्ञानसमुच्चयमुपदिश्य क्रमागतेन मानसिकेन कर्मणोपदिशन् प्राणायाममुद्दिशति—

अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे
प्राणापानगतीरुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

प्राणापानगतीरुद्ध्वा कोष्ठयस्य वायोः हृदयादूर्ध्वं संचारः प्रश्वासः प्राणगतिः, अन्तर्नयनं श्वासोऽपानगतिः । ते प्राणापानयोर्गती रुद्ध्वा—

श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ।

इति योगशास्त्र[1]लक्षणानुसारं प्राणायामपरायणाः योगाभ्यासिनः, अपाने श्वासे प्राणं प्रश्वासं जुह्वति । तथा प्राणे प्रश्वासेऽपानं श्वासं जुह्वति ॥ २९ ॥

अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

अपरे एतेभ्य उत्कृष्टाः, अभ्यासेन नियता जिता आहाराः, आहरन्ति रसादीनि इति व्युत्पत्त्या श्वासप्रश्वासाः, यैस्ते दृढयोगाः । प्राणान् देहान्तश्चारिणः पञ्चापि वायून्, समलधातुनामधोनयनसमंनयनोर्ध्वनयनतिर्यङ्नयनैः शरीरधारणादिहेतून् । प्राणेषु, हृदयादनवरतमुद्गच्छति परनादस्वरूपे वायौ, जुह्वति स्तम्भयन्ति । तदुक्तं योगानुशासने (२।४९–५०)—

श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ।

स तु—

बाह्याभ्यन्तरस्तम्भवृत्त्या देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ।

इति । यत्र प्रश्वासपूर्वो गत्यभावः स बाह्यः । यत्र श्वासपूर्वः स आभ्यन्तरः । तयोरभावस्तृतीयः स्तम्भवृत्तिरित्यादि । त्रयोऽप्येते हृदयाद्द्वादशान्तं यावल्लब्धभूमिजयप्रकारेण देशेनाभ्यस्ता दृष्टाः ।

---

१ पातञ्जलयोगसूत्र, पा. २, सू. ४९ ।

तथा कालेनान्तरप्राणादित्यसंचारापेक्षेण मासर्त्वयनादिरूपेण परिदृष्टः । तथा संख्याभिः प्रथमो द्वादशमात्राभिर्द्वितीयश्चतुर्विंशद्भिस्तृतीयः षट्त्रिंशद्भिर्मृदुमध्यतीव्राख्याभिः परिदृष्टः । इत्येवमभ्यस्तात् प्राणायामात् प्रकाशावरणं क्षीयते, परमात्मप्रकाश उदेतीति । तदेवमग्रिमाध्यायेषु विस्तरतो लक्षणीयस्य संयमयोगस्य ज्ञानसमुच्चये सामान्यत उद्देशं कृत्वा यज्ञानां फलमेवाह, सर्वेऽप्येते चत्वारोऽप्याश्रमिणः ब्रह्मार्पणयुक्त्या यज्ञं ब्रह्मात्मकं जानन्तो यज्ञेन यजनप्रकारेण क्षीणपापाः ॥ ३० ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।

यज्ञाय विनियुक्ताद्द्रव्याद्यदवशिष्टं तदेवामृतं भुञ्जानाः, सनातनं ब्रह्म यान्ति । द्रव्ययज्ञेऽवशिष्टमर्थमेवामृतम् । अन्येष्वमृतं परमानन्दः । एवं च चतुर्णामप्याश्रमिणां ज्ञानकर्मसमुच्चयेनैव निःश्रेयसमिति सिद्धे, यस्त्वालस्यप्रमादादिना कर्म संन्यसति तं निन्दति—

नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

स्पष्टम् ॥ ३१ ॥

सिद्धान्तमाह—

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

बहुविधाः, नित्यनैमित्तिकादिप्रकारैरनेकैः कार्याः अनेके च, ब्रह्मणो वेदस्यैव मुखे विततः । न तु केनचित् कल्पिताः ॥ ३२ ॥

कर्मजान् केवलकर्मजानित्याशङ्कामपहरति—

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

द्रव्यमयात् द्रव्यैकप्रचुरात्, ज्ञानं विना केवलेन कर्मणा साध्याद्यज्ञात्, ज्ञानयज्ञः ज्ञानसमुच्चितो यज्ञोऽतिप्रशस्तः । सर्वेषां वर्णानामाश्रमिणां च कर्म ज्ञाने फलानपेक्षाविचारे, अखिलं निःशेषेण, परिसमाप्यते

निष्ठां प्राप्नोति । ज्ञानयज्ञो हि सर्वान् यज्ञान् मोक्षफलान् करोतीत्यर्थः ॥ ३३ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥[1]

प्राप्यं विद्धीत्युद्देशमार्तो जिज्ञासुरर्थार्थीत्यत्राग्रे (७।१६) लक्षयति । मयैतदुक्तं यदि न श्रद्धत्से परेभ्यो ज्ञानिभ्यो—यत्तु पूर्वं तज्ज्ञानं प्रणिपातेन, ज्ञानिष्वार्त्या प्रह्वीभावेन । परिप्रश्नेन, गुरूपसत्तौ जिज्ञासया । सेवया, गुरूपदेशानुशीलनेन । इति कारणत्रयपरेभ्यो ज्ञानिभ्यो—श्रूयतामिति स्वा[न]पेक्षासूचनं श्रद्धास्थैर्याय । अथवाहमेवेदृशयत्नलभ्यमपि, भक्तोऽसि मे सखा चेति (४।३), प्रेरकाग्रे उपदेक्ष्यामीति भावः ॥ ३४ ॥

एवमुपदिश्य पूर्वोक्तमेव स्मारयति—

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३५ ॥

अपि संभावनायाम् । यदि त्वं परमार्थविचारं त्यक्त्वा निजसंभावनयैव सर्वेभ्योऽन्येभ्यः पापेभ्योऽतिशयाद्बन्धुवधादिना शङ्कितेन महत् पापं कर्तुं प्रवर्तितोऽस्मीति मनसि मिथ्या संभावयसि । तत् सर्वं पापमुक्तेन वक्ष्यमाणेन च ज्ञानेनैव प्लवेन संतरिष्यसि ॥ ३५ ॥

अत्र दृष्टान्तमाह—

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३६ ॥

---

१ अतोऽनन्तरं—

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण(पा. भे., शेषाणि) द्रक्ष्यस्यात्मन्यथो मयि ॥

इति श्लोकः आनन्दवर्धनटीकायां न व्याख्यातः, न वा मूले पठितः ।

सर्वाणि—

यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत् फलमवाप्नुयात् ॥
शरीरेण च शारीरं वाचा चैव हि वाङ्मयम् ।
मनसा मानसं चैव स्वकर्मफलमश्नुते ॥

इति । यान्यनारब्धफलानि प्राग्जन्मकृतानि यानि चास्मिन् जन्मनि कृतानि क्रियमाणानि च । तानि कर्माणि फलदानशक्तिक्षपणाज्ज्ञानमेव भस्मसाद्दग्धबीजरूपान् करोतीत्यर्थः ॥ ३६ ॥

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दते ॥ ३७ ॥**

पवेर्वेत्रात् त्रायत इति व्युत्पत्त्या पवित्रं संसारभयाद्रक्षकम् । योगेन, ज्ञानकर्मसमुच्चययुक्त्या वक्ष्यमाणेनाभ्यन्तरेणाष्टाङ्गयोगेन च । संसिद्धः सम्यक्तया सिद्धिं प्राप्तः । कालेन क्रमात् परिपाकेन तत्तत्परमार्थज्ञानमात्मनि स्वबुद्धावेव विन्दति साक्षात्करोति ॥ ३७ ॥

एवमुपदेशकानां प्रणिपातादिकं ज्ञाने बाह्यं निमित्तमुक्त्वा आभ्यन्तरमाह —

**श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३८ ॥**

स्पष्टम् ॥ ३८ ॥

अत्र व्यतिरेकमाह—

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ३९ ॥**

इदमुत्रासनं ज्ञानकर्मसमुच्चये प्रवृत्त्यर्थम् ॥ ३९ ॥

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४० ॥**

योगेन, संयमयोगविसया ज्ञानकर्मसमुच्चययुक्त्या, संन्यस्तानि,

क्रियमाणान्येव फलानपेक्षया परमेश्वरे समर्पितानि, येन तमत एवात्मवन्तमात्मज्ञानेन सावधानम् ॥ ४० ॥

अध्यायार्थमुपसंहरति—

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४१ ॥

तस्मादुक्तयुक्तेः आत्मनो ज्ञानासिना 'नायं हन्ति न हन्यते' (२।२०), इत्येवंप्रकारकेण । 'यस्य सर्वे समारम्भाः' (४।१९) इतीत्थंप्रकारेण चाज्ञानसंभूतं हृत्स्थं संशयं, ममैते बन्धवः पाल्या एव कथं म्रियन्ते । कुलक्षयकृतो दोषश्च भवेदित्येवंरूपं विपरीतं ज्ञानं छित्त्वा, योगं ज्ञानकर्मसमुच्चयं युक्तिमातिष्ठानुतिष्ठ युध्यस्वेत्यर्थः । उत्तिष्ठ किमिति रथोपस्थ उपविष्टः । स्वकर्मणि सज्जो भव ॥ ४१ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
चतुर्थोऽध्यायः ॥ ४ ॥

---

१ 'युद्धेत्यंशम्' इति तु मातृकायाम् ।

२ अत्रेयं पुष्पिका संपूर्णा मातृकायां लिखिता ।

## ॥ पञ्चमोऽध्यायः ॥

अथैवं सांख्ययोगशब्दयोः पूर्वाध्यायद्वयेनाऽर्थेऽवधारितेऽपि, फलस्पृहां विना ज्ञानेन समुच्चितं नित्यनैमित्तिककर्मानुष्ठानं श्रेयःसाधनं यदुपदिष्टं तस्य चित्तवृत्तिनिरोधं विना दुष्करत्वेन तदुपायभूतस्याभ्यन्तरस्य संयमयोगस्य समनन्तराध्यायान्ते 'योगसंसिद्धः कालेनात्मनि विन्दति' (४।३७) इति भगवता यदुद्देशः कृतस्तत्र 'योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्' (४।४०) इति पुनरपि समुपदिष्टयोगसंन्यासशब्दयोस्तात्पर्यानवधारणात्, 'अज्ञश्चाश्रद्दधानः संशयात्मा विनश्यति' (४।३९) इति समुत्पन्नत्रासोऽत्र निश्चयार्थम्—

अर्जुन उवाच

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

योगसंन्यस्तकर्माणमित्युक्त्वा पुनर्योगमातिष्ठोत्तिष्ठेति शंससि । तदेतयोः कर्मसंन्यासकर्मयोगयोर्मध्ये यः श्रेयानेकस्तं सुनिश्चितं, पूर्वनिश्चितमपि पुनरुपदेशेन संशयितस्य मे सुष्ठु निस्तुषीकृत्य ब्रूहि ॥ १ ॥

एतं संशयमपाकर्तुम्—

श्रीभगवानुवाच ।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥

यद्यपि

न प्रजया न धनेन त्यागेनैके अमृतत्वमानशुः ।

---

१ पूर्वे (पृ. ८०) मूले 'विन्दते' इति पाठः । टीकायां तु 'विन्दति' इति ।
२ 'यः श्रेयानेतयोरेकस्तं मे ब्रूहि विनश्चितम्' । इति प्रायः काश्मीरपाठः ।
३ कैवल्योपनिषद् २, २

इत्यादिश्रुत्यर्थानुसारं केवलज्ञानिभिः कर्मसंन्यासो निःश्रेयसकरः प्रोक्तः । तु, पुनर्विचार्यमाणे, कर्मसंन्यासात् कर्मयोगो विशिष्यते । कर्मणां संन्यासे हि केवलं ज्ञानमनुष्ठेयम् । तच्च—

ततो भूय एव ते तमो ये विद्यायां रताः ।

ईति प्रत्यवायकरणान्निषिद्धम् ।

विद्यां चाविद्यां च यस्तद्वेदोभयम् ।

ईति श्रुतिसिद्धादुभयोः समुच्चयात् कर्मयोगे विशेषः सिद्ध एव ॥ २ ॥

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते[३] ॥ ३ ॥**

इदमत्र तात्पर्यम् । येन दुरुच्छेदौ संसारे पाशभूतौ रागद्वेषौ प्रोक्तयुक्त्या छिन्नौ, स कुर्वन्नपि कर्माणि नित्यसंन्यासी ज्ञेयः । यस्तु मोहात् कर्माणि त्यक्त्वा रागद्वेषौ छेत्तुं न शक्नोति, स कथं मुच्यत इति ॥ ३ ॥

तदित्थं प्रागुक्ताभ्यां सांख्ययोगशब्दाभ्यां सांख्ये संन्यासिनोऽधिकारः, कर्मणि तु गृहस्थस्येति यस्ते संशयः स नास्तीत्याह—

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥[४]**

बाला विमर्शशून्या जनाः, सांख्ययोगौ पृथक्, भिन्नार्थकौ भिन्नपुरुषानुष्ठेयौ प्रवदन्ति । पण्डितास्त्वेवं न प्रवदन्ति । ते ह्येकामेव निष्ठां भिन्नेन प्रकारद्वयेन साध्यामेकेन पुरुषेणानुष्ठेयामाहुः । यत एकमपि सांख्यं योगं सम्यक्पूर्वोक्तक्रमेणास्थितो द्वयोरपि सांख्ययोगयोः

---

१ ईशावास्योपनिषद्, मन्त्रः ९ ।

२ ईशावास्योपनिषद्, मन्त्रः ११ ।

३ 'विमुच्यते' इति प्रायः काश्मीरपाठः ।

४ प्रचलितपाठस्थः 'यत् सांख्यैः प्राप्यते' इत्यादिपञ्चमश्लोकः नात्र आनन्दवर्धनेन पठितः ।

फलमेकरूपमेव विन्दति। उक्तपूर्वा चात्र युक्तिः। आवश्यकं कर्म कुर्वतामपि सांख्यानां यथोक्तात्मज्ञानसमाधौ न कोऽपि प्रतिबन्धः। सुखलभ्यैव श्रेयःप्राप्तिः। कर्माकरणे तु प्रत्यवायः श्रुतावुक्त एव। तथैव ज्ञानापरित्यागेन विहितं कर्म कुर्वतामेव सर्वेषां वर्णाश्रमिणां श्रेयः सुलभमेव। ज्ञानं विना तु बन्ध इति। तदेवं ज्ञानिनां कर्माविनाभावात्, कर्मिणां च ज्ञानाविनाभावात्, द्वयोस्तुल्य एव फललाभः ॥ ४ ॥

एतदेव द्रढयति—

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ५ ॥

हे महाबाहो, संन्यासस्तत्संभावितं नैष्कर्म्यम्, अयोगतः, प्रोक्तां ज्ञानकर्मसमुच्चययुक्तिं विना, दुःखमाप्तुं दुःखमात्रप्रापक एव, न तु निःश्रेयसकरः। योगयुक्तः ज्ञानकर्मसमुच्चययुक्तिज्ञः। मुनिर्मननशीलो ज्ञानी। नचिरेण ब्रह्म अधिगच्छति। तथा च अयोगतः अष्टाङ्गयोगाभ्यासं विना, संन्यासः कर्मसंन्यासो वा दुःखमाप्तुं, दुःखप्राप्तय एव भवति। यस्तु योगेनाभ्यन्तरेण ध्यानधारणासमाधिभिः संयमेन वक्ष्यमाणेन युक्तः, स ब्रह्म नचिरेणाधिगच्छति ॥ ५ ॥

अतः परमाभ्यन्तरमेव संयमयोगं प्रपञ्चयति—

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ६ ॥

योगयुक्तः, विशुद्धात्मा विशुद्धो विमल आत्मा बुद्धिर्यस्य, विजितः संयमेन वशीकृतः आत्मा मनो येन, एवं जितेन्द्रियः। एवं सर्वेषु भूतेषु चतुर्दशविधेषु आत्मभूतः, संक्रान्त्युत्क्रान्तिसामर्थ्याद्वक्ष्यमाणया महाविदेहाख्यया वृत्त्या, तत्तत्कायावशेन कर्मभोगार्थं संपन्न आत्मा यस्य। स कुर्वन्नपि न लिप्यते ॥ ६ ॥

---

१ 'कुर्वन् वापि' इति भास्करपाठः।

कथमित्याह—

नैव किंचित् करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यञ्शृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् श्वसन् स्वपन्॥ ७॥

प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्॥ ८॥

युक्तः, ज्ञानकर्मसमुच्चयानुष्ठानपूर्वं संयमाभ्यासी। तत्त्ववित्, विषयेन्द्रिययोः ग्राह्यग्राहकतात्मतां विन्दन्। पश्यन्नालोचयन्नित्यर्थावगमाद्बुद्धिम्। शृण्वन्निति श्रोत्रे। स्पृशन्निति त्वचम्। जिघ्रन्निति घ्राणम्। अश्नन्निति रसनाम्। गच्छन्निति पादौ। श्वसन्निति प्राणान्। स्वपन्निति 'निरिन्द्रियप्रदेशे मनसोऽवस्थानं निद्रा' इति लक्षणानुगमान्मनः। प्रलपन्निति वाचम्। विसृजन्निति पायूपस्थौ। गृह्णन्निति हस्तौ। उन्मिषन्निति चक्षुः, व्यापारयन्। इतीत्थं ज्ञानेन्द्रियकर्मेन्द्रियप्राणान्तःकरणानां व्यापारं कुर्वन्नपि इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्। विषयेन्द्रिययोर्हि ग्राह्यग्राहकात्मकोऽयं संबन्धः स्वाभाविकोऽनपायी। आत्मनस्तु फलानपेक्षस्य न कश्चिदेभिः संबन्ध इत्यवधारयन्। नैव किंचित् करोमि, फलग्रहणाभावात् कृतमकृतमेवेति, जानीते। अथ च युक्तः। आभ्यन्तरयोगाभ्यासेन पूर्वपूर्वभूमिजयादुत्तरोत्तरां भूमिमारूढः। तत्त्ववित् संप्राप्तप्रज्ञालोकः, पश्यन् शृण्वन् इतीत्थं यदिन्द्रियं यस्मिन्निन्द्रियार्थे वर्तते तत् तत्र धारयन्। योगानुशासने द्वितीयपादे—

इन्द्रियाणां विषयसंप्रयोगे चित्तस्य स्वरूपानुकार इव प्रत्याहारः। ततः परमा वश्यतेन्द्रियाणाम्।

इति सूत्रद्वये (२।५४, ५५)। शब्दादिष्वव्यसनमिन्द्रियजय इत्येके। रागद्वेषाभावे सुखदुःखादिशून्यं शब्दादिज्ञानमिन्द्रियजय इति केचित्।

---

१ चतुर्थचरणः भास्करेणैवं पठितः—

भुञ्जन् गच्छन् श्वसन् स्मयन्।

प्रचलितपाठे 'श्वसन् स्वपन्' इतिस्थाने 'स्वपन् श्वसन्' इति वर्तते।

चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः। इति वृत्त्यैर्थावगमात्, धारणां विषयीकुर्वन्, नैव किंचित् करोमीति मन्यते। एवं ध्यानधारणासमाधिसमुदायसंज्ञके संयमे दृढाभ्यासस्य—

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः।

इति सूत्रे (३।४७) शब्दादिषु विषयेषु श्रोत्रादीनां वृत्तिर्ग्रहणम्। श्रोत्रस्य शब्द एव वृत्तिरित्यादिस्वरूपम्। अहं शृणोमि इत्यादिरहंकारोऽस्मिता। व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला हि गुणाः, येषामिन्द्रियाणि साहंकाराणि परिणामः, इत्यन्वयः। सर्वे एवैते पुरुषोपभोगप्रयोजना इत्यर्थवत्त्वम्। एषु पञ्चसु यथाक्रमं संयमादिन्द्रियजयः प्रादुर्भवतीति वृत्त्यर्थावगमाद्योगारूढस्य स्फुट एव कर्तृत्वानभिमानः॥ ७॥ ८॥

एतदेवोपपादयति—

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥ ९॥

ब्रह्मार्पणप्रकारेण ब्रह्मणि आधाय समर्प्य कर्माणि श्रुतिचोदितानि। क्रियासङ्गं फलस्पृहां त्यक्त्वा यः करोति, स पापेन न लिप्यते। अथ च यो जितेन्द्रियो योगी सर्वे एवैते पुरुषोपभोगप्रयोजना इत्यर्थवत्त्वे संयमात् कर्माणि बाह्याभ्यन्तरकरणकार्याणि श्रवणदर्शनादीनि ब्रह्मणि समर्प्य तदनन्तरं सङ्गं त्यक्त्वा ज्ञानेन्द्रियविषयीकृतं सर्वं स्वर्णतृणादिकं हि बुद्ध्या हेयोपादेयोपेक्षणीयत्वेनाप्यवसितम्। मनसाप्येवमेव संकल्पितम्। अत्र अहमधिकृत इत्यहंकारेणाभिमतम्। पुरुषः हानोपादानोपेक्षालक्षणक्रियां विषयीकरोति। ततः क्रियाफलं त्रासादिकं भुङ्क्ते इत्येवं शृङ्खलाबन्धरूपो हि सङ्गः। प्रादुर्भूतेन्द्रियजयो हि सङ्गं, परस्पराभिप्रायहेतुकम्, सर्वे पुरुषोपभोगार्थमेव प्रवर्तन्त इति प्रोक्तप्रकारकं शृङ्खलाबन्धं त्यक्त्वा, यः करोति नासौ पापेन लिप्यते। पद्मपत्रमिवाम्भसेति दृष्टान्तः। तथा चोक्तमिदं कैवल्यपादे—

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्।

---

१ द्रष्टव्यमत्रत्यं पातञ्जलसूत्रे व्यासभाष्यम्।

इति (४।७) सूत्रे । चतुष्पात्खल्वियं कर्मजातिः । कृष्णा, शुक्ला, शुक्लकृष्णा, अशुक्लकृष्णा चेति । तत्र कृष्णा दुरात्मनां, परान् पीडयित्वा भवति । शुक्ला तपःस्वाध्यायवतां, मनस आयतत्वान्न वहिःसाधनाधीना, परान् पीडयित्वा न भवति । शुक्लकृष्णा बहिर्ध्यानसाध्या, परपीडानुग्रहद्वारेण कर्माशयप्रचयात् । अशुक्लाकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति । अशुक्लां फलसंन्यासादकृष्णां चानुपादानात् । इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति ॥ ९ ॥

........मेवं लक्षयति—

कायेन मनसा बुद्धया केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मसिद्धये ॥ १० ॥

तत्र तत्र संयमेन भूयसीनां भूमीनां जये विदेहधारणां प्राप्ताः इन्द्रियजयप्रादुर्भवात् 'मनोजवि(यि)त्वविकौरप्राप्त्यभावप्रधानजयाः' इति सिद्धित्रयं प्राप्य, कायिकस्य, तत्र तत्र देशे काले च हस्तपाददृगादिभोगस्य, कर्मणः क्षपणार्थं केवलेन कायेनेन्द्रियबुद्धिमनोऽहंकारानिरपेक्षेण, अत एव सङ्गं परस्पराभिप्रायेण शृङ्खलाबन्धरूपं प्रवर्तनं, त्यक्त्वा आत्मसिद्धये भूतेन्द्रियसंघातात् प्रकृतेश्च पृथक्त्वेन स्वरूपेऽवस्थानार्थं, योगारूढाः कर्म कुर्वन्ति । एवं मानसिकस्य कर्मणः भोगेन क्षपणार्थं केवलेन मनसेत्यादि योज्यम् ॥ १० ॥

एतदेवाभ्यासार्थं पुनरेवाह—

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ ११ ॥

युक्तः, प्रोक्तेन क्रमेणाभ्यस्तयोगधारणः । कर्मणः कायिकादेः फलं, 'ब्रह्मण्याधाय कर्माणि' (श्लो० ९) इति व्याख्यातार्थानुसारं परस्परा-

---

१ अत्र द्वित्राणामक्षराणां पातः । 'संयममेव' इति स्यात् ।
२ '०शुद्धये' इति प्रचलितपाठो भास्करेणानुसृतो वर्तते ।
३ योगसूत्रे (३।४७)तु 'विकरणभाव' इति द्वितीयसिद्धेरभिधानम् ।

भिप्रायप्रवृत्तिजनितं सुखदुःखादिकं त्यक्त्वा, नैष्ठिकीं परमां काष्ठां प्राप्तां शान्तिमाप्नोति । अयुक्तः अनभ्यस्तयोगः—

युगपच्चतुष्टयस्य वृत्तिः क्रमश[श्च] तस्य निर्दिष्टा ।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विकावृत्तिः ॥
स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहैतुकीं वृत्तिम् ।[1]

इत्युक्तिक्रमात् प्राप्तेन कामकारेण फले सक्तो शृङ्खलाबन्धप्राप्तः फले सक्तो निबध्यते ॥ ११ ॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे गेहे[2] नैव कुर्वन् न कारयन् ॥ १२ ॥**

वशी स्वतन्त्रः गुणसमुदायात्मिकायाः प्रकृतेर्योगाभ्यासवशात् पृथग्भूतः, सर्वेषां महदादीनां प्रकृतिविकृतीनां कर्माण्यध्यवसायादीनि मनसा संन्यस्य, मननाभावादेवोपेक्ष्य, इन्द्रियजयप्रादुर्भावेऽहंकार-संयमान्नैव कुर्वन्, अर्थवत्त्वसंयमान्नैव कारयन्, प्रकृतिजयं प्राप्तो नवद्वारे पुरे शरीर एव गृहे सुखमास्ते, जीवन्मुक्त्या विश्रामं भजति । यथा चक्रवर्ती राजा विजितसकलभूमिरप्राप्तप्रेप्साया अभावात् कृत-कृत्यो नैव कुर्वन् न कारयन् नवद्वारे पुरे सुखमास्ते तथेत्यर्थः ॥ १२ ॥

एवं तस्य जीवन्मुक्तस्य दृश्या या शरीरचेष्टा सा कथमित्याह—

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १३ ॥**

प्रभुः प्रकृतिपृथक्त्वात् स्वातन्त्र्येण वैभवं प्राप्तः । स्वयं निष्क्रियः । लोकस्य दृश्यस्य बुद्ध्यादेः कर्तृत्वं, क्रियतामिति अध्यवसायादिष्व-धिकारं, न सृजति । नापि कर्म, अध्यवसायादीनि सृजति । न च कर्म-णोऽध्यवसायादेः फलेन, रागद्वेषानुगुणहानोपादानोपेक्षात्मना, संयोगं सृजति । तु पुनः, स्वभावः बुद्ध्यादीनां स्वात्मीयभावोऽध्यवसायादिः,

---

१ सांख्यकारिका, ३०।३१ ।

२ 'देही' इति प्रचलितपाठो भास्करेणानुसृतो गोण्डलमातृकायां च वर्तते । 'देहे' इति रामकव्यभिनवगुप्तयोः पाठो कलकत्तामातृकायां वर्तते ।

प्रवर्तते । यथा जितसकलसामन्तश्चक्रवर्ती स्वपुरे, विश्रान्तिसमयेऽमात्यवर्गस्य प्रयोजनाभावात्, किंचिन्नाज्ञापयति, ते तु स्वयमेव
९ स्वाधिकारे प्रवर्तन्ते, तथेत्यर्थः । तथा चोक्तम्[1]—

सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिरिव धृतशरीरः ॥

१२ इति ॥ १३ ॥

एतदेव सामान्योक्त्या हृदये संनिवेशयितुमाह—

**नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १४ ॥**

अज्ञानेन, मिथ्याज्ञानेन अविद्यापर्यायेण तमसा अनात्मसु देहादिषु
३ आत्मबुद्ध्या, परमात्मज्ञानमावृतम् । तेन मुह्यन्ति जन्तवः । वानरमुष्टिन्यायेन[2] बन्धनमनुभवन्तीत्यर्थः ॥ १४ ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत् परम् ॥ १५ ॥**

तदज्ञानमविद्यात्मकं तमः येषां ज्ञानेनात्मानात्मविचारेण आत्मनो नाशितम् । तेषां तत् परमार्थज्ञानमादित्य इव तत् प्रसिद्धं नित्यं च
३ परं प्रकृतिपृथग्भूतं ब्रह्म प्रकाशयति ॥ १५ ॥

तस्यात्मतत्त्वज्ञानस्याभ्यासार्थमाह—

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूत[3]कल्मषाः ॥ १६ ॥**[4]

---

१ सांख्यकारिका, ६७ ।

२ यथा कश्चिद्वानर आत्मन एव वाममुष्टिना धृतं फलादि दक्षिणहस्तेनोद्घाटयितुं दृढं प्रयत्नमातनोति, तथा जन्तुरज्ञानादात्मदोषं यत्र परस्मिन्नारोपयति, स्वप्रयत्नसाध्यं वा वस्तु परायत्तमिति कलयति, तत्रायं न्यायः प्रवर्तते ।

३ '०निर्धौत०' इति प्रायः काश्मीरपाठो भास्करवर्जम् ।

४ अतः परमभिनवगुप्तेनाधिकः श्लोकः पठितो यथा—

स्मरन्तोऽपि मुहुस्त्वेतत् स्पृशन्तोऽपि स्वकर्मणि ।
सक्ता अपि न सज्जन्ति पङ्के रविकरा इव ॥

तस्मिन् ब्रह्मणि बुद्धिरिदमेव परप्रकाशकं परमोपेयमित्यध्यवसायो येषां, तस्मिन्नेव निष्ठा निर्वाहो येषां, ततः परमन्यस्योपेयस्याभावात्, तदेव परमयनं गतिर्येषां, ते। ज्ञाननिर्धूतकल्मषाः, अपुनरावृत्तिं गच्छन्ति ॥ १६ ॥

एवं विदेहां धारणामुक्त्वा महाविदेहां दर्शयति—

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १७ ॥**

पण्डिता योगधारणाभिज्ञाः, प्रकाशावरणक्षये जाते प्राप्तमहाविदेहाख्यवृत्तयः प्रादुर्भूताणिमादिसिद्धयः,—

आत्मनो वै शरीराणि बहूनि युगपन्नृप।
प्राप्य योगवरं कुर्यात् तैश्च सर्वा महीश्चरेत् ॥
भुञ्जीत विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत्।
संहरेच्च पुनस्तानि सूर्यस्तेजोगणानिव ॥

इत्यादिप्रथममुपोद्घात एव लक्षितया आत्मनो व्यापकत्वे न्यायवार्त्तिकादिदर्शितया उपपत्त्या कर्मणामुपभोगेन क्षयार्थं तत्तत्कर्मफलोपभोगसमर्थानि नाना शरीराणि गृह्णन्तः। विद्याविनयसंपन्ने ब्राह्मणे ब्राह्मणशरीरे विषये स्थिताः, समदर्शिनः सममेकमविकारं ब्रह्म द्रष्टुं शीलं येषां तादृशाः सन्तीत्यन्वयः। विगतरागद्वेषाभिमानानां ब्राह्मणशरीराश्रयेण किमपि सुकृतं नादेयम्, श्वपाकशरीराश्रयेण किमपि दुष्कृतं न ग्राह्यमित्यर्थः ॥ अत्रायमर्थसंग्रहः। योगी यद्यपि महाविदेहाख्यया संयमवृत्त्या तत्तत्प्रारब्धसुकृतदुष्कृतफलोपभोगार्थं मनुष्येषु पशुषु वा तानि तान्युत्तममध्यमाधमशरीराणि गृह्णाति, तस्य तत्र स्पृश्यत्वास्पृश्यत्वपुण्यापुण्यलेपो नास्ति, यथा सूर्यस्य पुण्यापुण्यभूमिसंपर्कात्। तथा चात्र विद्याविनयसंपन्नो ब्राह्मणो मनुष्येषूत्तमः। अन्ये क्षत्रियादयो मध्यमाः। श्वपाकोऽधमः। पशुषु पुण्यतया गौरुत्तमा। हस्ती मध्यमः। श्वाधमः ॥ १७ ॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १८ ॥**

केचिदिमं श्लोकं षष्ठेऽध्याये पठन्ति । शंकरण त्वस्मिन्नध्यायेऽत्रैव विवृतः । संगच्छते चात्रैव । तथा हि, येषां महायोगिनां प्रोक्तार्थया विदेहया संयमवृत्त्या विद्याविनयसंपन्न[ब्राह्मणा]ब्राह्मणादिदेहेषु निजकर्मणां भोगेन क्षपणार्थं स्थितानां साम्ये तद्गुणदोषलोपाभावे मनः स्थितं, तैर्योगिभिरिहास्मिन्नेव जन्मनि सर्गश्चतुर्दशविधः सर्वो भूतसर्गो जितः—

सूर्यद्वारे संयमाद्भुवनज्ञानम् ।

इति (३।२६) योगसूत्रार्थविवक्षया महायोगसिद्ध्या प्रकाशावरणक्षयात् संयमेन तत्र तत्र भुवने तेन तेन भूतेन्द्रियादिसंघातात्मना देहेन कर्मणां भोगेन क्षपणात्—

जितां जितां तथा भूमिमारुहेत यथाक्रमम् ।
दोषान् व्याधिं तथा मोहमाक्रान्ता भूरनिर्जिता ॥

इति स्मरणात् । सर्वा एव भूमीरुल्लङ्घ्य परमां भूमिं कैवल्यं प्राप्त इत्यर्थः । अत्रोपपत्तिमाह । हि यस्मान्निर्दोषं निर्लेपं समं निर्विकारं ब्रह्मास्ति, तस्मात् ते महायोगिनः प्रधानत्वं यावज्जितभूमयो ब्रह्मणि स्थिताः सर्वासां भूमीनां जयादतः परं जेतव्याभावात् स्वस्वरूपं प्राप्ता इत्यर्थः । सर्वं चैतत्—

अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ।
निजं शरीरमुत्सृज्य परकायप्रवेशताम् ॥
अर्थानां छन्दतः सृष्टिर्योगसिद्धेस्तु लक्षणम् ॥

इति याज्ञवल्क्यस्मृतौ (३।२०२,३) विवृतमपरार्केण विस्तीर्यते । अन्तर्धानमदृश्यदेहत्वं, तच्चाणिमाख्यगुणप्राप्त्याणुत्वे संभवति । तथा चात्र योगसूत्रम् (३।२१)—

---

१ 'भुवनज्ञानं सूर्ये संयमात्' इति योगसूत्रम् ।

२ द्रष्टव्यं योगसूत्रम्, ३ । ४३ ।

३ द्रष्टव्या याज्ञवल्क्यस्मृतावपरार्कटीका (आनन्दाश्रम०, पृ०१०२८) ।

कायरूपसंयमाद्रूपशक्तिस्तम्भे चक्षुःप्रकाशसंयोगेऽन्तर्धानम् ।

इति । स्मृतिर्जन्मान्तरानुभूतार्थविषया । सूत्रं चात्र (३।१८)—

संस्कारसाक्षात्करणात् पूर्वजातिपरिज्ञानम् ।

इति । कान्तिः कमनीयत्वम् । सूत्रितं च (३।४५)—

ततोऽणिमादिप्रादुर्भावः कायसंपत् तद्धर्मानभिघातश्च ।

इति । दृष्टिरतीतानागतव्यवहितविप्रकृष्टार्थविषया । श्रोत्रज्ञता श्रोत्रेन्द्रियसाक्षात्कारः । अनेन चात्मव्यतिरि[क्ताव्य]क्तबुद्ध्यहंकारपञ्चतन्मात्रैकादशेन्द्रियपञ्चभूतानां साक्षात्कारित्वमुक्तम् । शास्त्रसूत्रं च (३।२५)—

प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टम् ।

इति । अस्यार्थः । ज्योतिष्मती प्रवृत्तिरुक्ता मनसः । तस्यायमालोकस्तं योगेन सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वार्थे विन्यस्य तं तमधिगच्छति । इत्यादि । निजं स्वकीयं शरीरं पूर्वकर्मारब्धमुत्सृज्य परकायं प्रविश्य तदन्तर्गततया तद्विषयोपभोक्तृत्वम् । सूत्रं चात्र (३।२६,३८)—

भुवनज्ञानं सूर्ये संयमात् ।

बन्धकारणशैथिल्यात् तु प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ।

इति । अर्थानां छन्दतः सृष्टिः । अर्थानां पृथिव्यादीनां स्रष्टव्यानां पदार्थानां छन्दतः स्वातन्त्र्येणोत्पादनमिति । योगसूत्रे च (३।४३,४)—

बहिरकल्पिता वृत्तिर्महाविदेहा ।

इति ।

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ।

इति । तथा च प्रत्यभिज्ञाविमर्शिन्यामाभिनवगुप्तपादाः—

१ मातृकायां '०भूतः' इति पाठः ।

२ शिवसूत्रप्रत्यभिज्ञाविमर्शिनी काश्मीरग्रन्थमालायां प्रसिद्धा वर्तते । किं तु तस्यामिदं वचनं नास्माभिरधिगतम् ।

दृश्यन्ते बहुशो योगिनः स्वदेहे स्वगृहे स्थिताः स्ववशीकृतप्राणसमागमयोगेन देहान्तरेऽपि वस्तुविज्ञानक्रियायोगिनः। इत्यादि। सर्वं चैतद्योगानुशासनाद्यथोपयोगं शिष्याणां बुद्धौ सद्यः संनिवेशयितुं लिखामः॥

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः[1]। समाधिभावनार्थः क्लेशतनूकरणार्थश्च[2]। तत्राध्यात्मिकादिदुःखसहिष्णुत्वं तपः। बाह्यनिमित्तनिरपेक्षं शारीरं मानसिकं च दुःखमाध्यात्मिकम्। मनुष्यपश्वादिभूतान्यधिकृत्योत्पन्नमाधिभौतिकम्। दैवप्रयुक्तं शीतातपादिनिमित्तमाधिकृत्योत्पन्नमाधिदैविकम्। तदेतत् त्रिविधमपि दुःखं शान्तभावेन नियमं कृत्वा सहमानस्य धर्माधर्मयोः संचयक्षयकारणं तप इत्युच्यते। ततो धर्मसंचयाद्योगप्रवृत्तिहेतुः श्रद्धाद्यतिशयो भवति, अधर्मक्षयाच्च व्याधिस्त्यानसंशयप्रमादालस्यादीनामन्तरायाणामुपशमः। ततोऽनाकुलचित्तं समाधीयते॥ ननु दुःखेभ्यस्तपोभ्यश्चित्तविक्षेप एव भवति, अतो न योगार्थिना तपः कर्तव्यम्। धर्माधर्मयोः संचयक्षयौ च जपप्रत्याहारादिभ्य एव भवतः। तपःसाधनत्वे तु प्रमाणं नास्तीति। नैतदस्ति। यो ह्युन्मादकामादिभिरभिभूतः स कथं जपप्रत्याहारादिकं कर्तुं शक्नोति। अतः तेन तपः कर्तव्यम्। यथा वस्त्रस्य स्थूलो मलः स्थूलोपायेन निवर्त्यते, सूक्ष्मः सूक्ष्मोपायेनेति। तथात्मनोऽपि स्थूलो मलस्तावत् स्थूलोपायेन निवर्त्यते, सूक्ष्मस्तु पश्चात् सूक्ष्मोपायेन जपप्रत्याहारादिना निवर्त्यते इति। प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्यायः। क्षुद्रसिद्धिरपीश्वरवाची मन्त्रोऽस्तीति तत्प्रतिषेधार्थं प्रशान्तग्रहणम्। योगशास्त्राभ्यासो वा स्वाध्याय इति। परमेश्वरतत्त्वस्य भक्त्यतिशयात् प्रबन्धेनानुचिन्तनं पर्यालोचनमीश्वरप्रणिधानम्। स्तुतिजपपुष्पादिभिराराधनं वा। सर्वक्रियाणां परमगुरावर्पणं वा। तद्वाचकस्य प्रणवस्य[3] जपस्तदर्थभावनं च इति। सेयं तपःस्वाध्यायादिलक्षणक्रिया योगहेतुत्वाद्योग इत्युच्यते। स च क्रियायोगः संसेव्यमानः समाधिं भावयति। क्लेशांश्च तनूकरोति।

---

१ योगसूत्र, २।१।  २ योगसूत्र, २।२।

३ योगसूत्र, १।२८।

यथा च क्रियायोगः क्लेशक्षयहेतुस्तथा योगाङ्गान्यपीत्यतस्तान्यप्यतियत्नेनानुष्ठेयानि। कानि पुनस्तानि योगाङ्गानि कियन्ति वेत्युच्यते— यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि[1]। निवर्तकानीत्यर्थः। समाधित्वे कोऽन्यो योगस्य समाधिरङ्गमिति चेत्, समाधिरेवान्त्यप्रकर्षापन्नो योगस्तस्य पूर्वः समाधिरङ्गम्। अन्त्यशब्दस्याद्यमध्यशब्दवत्। अथवा सर्वोऽपि समाधिप्रकर्षः पूर्वसमाधिजन्यत्वेन योग उत्तरप्रकर्षकत्वेनाङ्गमिति। यदि समाधित एव समाधिर्भवति, नन्वेकमेवाङ्गं पर्याप्तमतोऽष्टावङ्गानीति न वाच्यम्। न। पूर्वपूर्वासिद्धावुत्तरोत्तरासिद्धेः। न हि यमासिद्धौ नियमाः सिध्यन्ति। नियमासिद्धौ चासनं न सिध्यति। आसनासिद्धौ च प्राणायामो न सिध्यति। प्राणायामस्यासिद्धौ न प्रत्याहारसिद्धिः। प्रत्याहारासिद्धौ च धारणा न सिध्यति। धारणासिद्धौ च ध्यानं न सिध्यति। ध्यानासिद्धौ च समाधिर्न सिध्यति। ततोऽष्टानामपि योगाङ्गत्वमिति॥

अत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धिवृद्धिहेतवो यमाः। शुद्धिरधर्मक्षयो, वृद्धिर्धर्मोपचयः। अथ वा शुद्धिश्चित्तवैमल्यम्, वृद्धिर्योगोत्कर्षः। तद्धेतवो देशादिभिरनियताः सर्वस्मिन् देशेऽनुष्ठीयन्ते। सर्वस्मिन् काले सर्वस्यामवस्थायाम्। ते यमा अहिंसादयः। ननु अहिंसादयोऽपि केचिद्देशादिनियमेनानुष्ठीयन्ते। यथा तीर्थे हिंसां न करिष्यामि, पर्वदिवसेषु वा, अयुद्धावस्थायां वा प्राणिवधं न करिष्यामि, इति। न। देशाद्यपेक्षित्वे हिंसादीनामपि नियमत्वात्। अत एव गृहस्थादेः परमार्थतो यमा न सन्ति। यमैरुपेतो हि यतिरित्युच्यते। यमाभावे कथं गृहस्थादेर्नियमनिष्पत्तिरिति चेन्न। प्रवर्तकधर्मनिष्पादकनियमनिष्पत्तेरविरोधात्। निवर्तको हि यतिधर्मः। तद्धेतवो नियमा भ्रष्टनियमस्य न निष्पद्यन्ते इति। देशकालावस्थापेक्षिणः पुण्यहेतवः क्रियाविशेषा नियमाः। तत्र देशापेक्षि देवताप्रदक्षिणं, कालापेक्षि संध्योपासनम्। जपक्रिया तु शुद्ध्यवस्थामात्रमपेक्षते। पुण्यातिशयं प्रदेशाद्यपेक्षितत्वमप्यस्ति— 'अनन्तं

---

१ योगसूत्र, २।२९।

शिवसंनिधौ' इत्यादिश्रवणात्। एवमन्येऽपि क्रियाविशेषा देशाद्यपेक्षितत्वेन नियमा इति॥

पतञ्जल्यभिप्रायेण तु निवृत्तिलक्षणा यमाः, प्रवृत्तिलक्षणा नियमाः, इति नियमलक्षणं द्रष्टव्यम्। तथा चोक्तम् (सू० २।३२)—स्वाध्यायेश्वरप्रणिधानानि नियमाः, इति। योगकर्मविरोधिक्लेशजयार्थः करणबन्ध आसनम्। योगक्रियाया ये विरोधिनः क्लेशाः, व्याधयः, तेषां ह्यासनजयाज्जयः श्रूयते। करणान्यत्र शरीरावयवाः पादादयस्तेषां बन्धः संयमः प्राणायामादिसिद्ध्यर्थः। तदासनं, स्थिरं सुखेनोपवेशनमित्यर्थः। तच्चपद्मकस्वस्तिकाद्यनेकप्रकारम्। कोष्ठस्थस्य वायोः श्वासप्रश्वासलक्षणस्य गतिविच्छेदः प्राणायामः। प्रच्छन्ने निवाते निर्जने निःशब्दे च प्रदेशे यथासुखमासनं बद्ध्वा रेचकपूरककुम्भकप्रचारः कर्तव्यः। स च शनैः शनैः जेतव्यो वनगजेन्द्रवत्। यथा वनगजेन्द्रः प्रयोगेण शनैः शनैर्जीयमानो महान्तमुपकारं करोति, हठादिप्रयोगेण गृहीतस्तु विनाशमेव करोति। तथा वायुः प्रयोगेण शनैर्जीयमानो शेषमधर्मं रागादिमलं च निर्णाश्य योगं प्रापयति। अप्रयोगेणातिक्रम्य वा गृहीतस्तु वातगुल्माद्यनर्थमेव करोतीति॥

समाधिप्रत्यनीकार्थेभ्यः समन्तात् चेतसो व्यावर्तनं प्रत्याहारः। प्रत्याहृते हि चेतसीन्द्रियाण्यपि प्रत्याहृतानि भवन्ति। कस्मात्। तन्मूलत्वादिन्द्रियाणां प्रवृत्तेः। प्रत्याहाराभियुक्तस्येन्द्रियजयः समाधिलाभश्च भवति नान्यथेति। देशबन्धः चित्तस्य धारणा। कोऽत्र देशः कश्च देशे चित्तस्य बन्ध इति। शरीरावयवपादादिबाह्ये वा सूर्यमण्डलादिदेश इत्येके। वयं तु ब्रूमः। परमात्मैवात्र देशोऽभिप्रेतः। तदाराधनत्वान्मोक्षार्थिनः पादादिषु धारणानां हि विष्णुलोकादिफलप्राप्तिः फलं श्रूयते। चित्तस्य मनसः प्रयत्नेन धारणं निश्चलीकरणं बन्ध इत्युच्यते धारणेति वा। तत्र प्रत्ययैकतानता ध्यानम्। तस्मिन् धारणादेशे ध्येयालम्बनस्य प्रत्ययस्य सदृशः



१ योगसूत्र, ३।१। २ योगसूत्र, ३।२।

प्रवाहः, प्रत्ययान्तरेणापरामृष्टः, ध्यानम् । तत्रैकतानतेत्युक्तेः, चित्तस्येत्यनुवृत्तेः, चित्तस्यैकतानतेति गम्यते । मनसश्च सदृशप्रवाहकर्तृत्वमेवैकतानतेति ॥

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः (सू० ३।३) इति । ध्यानमेव ध्येयाकारमात्रनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव, जपाद्युपाधिसंसर्गात् स्फटिकवत् । इदं ध्येयम्, अहं ध्यायामि, इति भेदेन शून्यं भवति, तदा समाधिरित्युच्यते । यद्वा। ध्यानोत्कर्षात् निवाताचलप्रदीपावस्थानमिव एकत्रैव चेतसोऽवस्थानं समाधिरभिधीयते। स च प्रज्ञालोकचिह्नः। समाध्युत्कर्षतारतम्याद्धि प्रज्ञालोकतारतम्यं भवति । तथा चात्र पतञ्जलिसूत्राणि तृतीये पादे। त्रयमेकत्र संयमः (सू० ४)। तदेतद्धारणाध्यानसमाधित्रयमेकविषयं योगसाधनं संयम इत्युच्यते। तज्जयात् प्रज्ञालोकः (सू० ५) । तस्य संयमस्य जयात् समाधिप्रज्ञाया भवत्यालोकः । यथा यथा संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विप(श)दीभवति । तस्य भूमिषु विनियोगः (सू० ६) । तस्य संयमस्य जितभूमेर्यानन्तरा भूमिस्तत्र विनियोगः । न ह्यजिताधरभूमिरनन्तरां भूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते । तदभावे कुतः प्रज्ञालोकः । जितोत्तरभूमिकस्य च नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः। त्रयमन्तरङ्गं पूर्वेभ्यः (सू० ७)। पूर्वेभ्यः संयमादिभ्यः पञ्चभ्यो धारणादित्रयमन्तरङ्गम् । तदपि बहिरङ्गं निर्बीजस्य (सू० ८) । तदभावे भावात् । लक्षितो हि प्रथमे पादे निर्बीजसमाधिर्यथा—समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवनवो जायते। तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः (सू० १।५१)। इति॥

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् (सू० ३।१८) । द्वये खल्वमी संस्कारा वासनारूपस्मृतिक्लेशहेतवः । तेषु संयमः संस्कारसाक्षात्क्रियायै समर्थः। तदित्थं संस्कारसाक्षात्करणात् पूर्वजाति-

---

१ अत्र प्रायष्टीकाकृता सूत्रादनन्तरं व्यासभाष्यमपि संक्षेपेण लिखितम् ।

२ इयं प्रथमपादस्य ५० सूत्रस्य व्यासभाष्ये अवतरणिका ।

ज्ञानम्¹। [ सर्वमेतत् ] साक्षात्करणीयम्। यतो योगिना तत्र तत्र तत्तत्कर्मोपभोगसमर्थं देहं कृत्वा भोगेन कर्माणि क्षपणीयानि। इत्यादि। बन्धकारणशैथिल्यात् तु प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः (सू० ३।३८)। लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः। तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति। प्रचारसंवेदनं च चित्तस्य समाधिजमेव। कर्मबन्धक्षयात् स्वचित्तसंचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति। निक्षिप्तं चित्तं चेन्द्रियाण्यनुपतन्ति। यथा मधुकरराजं मक्षिका उत्पतन्तमनुपतन्ति, निविशन्तमनुनिविशन्ते, तथेन्द्रियाणि परशरीरावेशे चित्तमनुनिविशन्ते, इति। उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च (सू० ३।३९)। समानजयाज्ज्वलनम् (३।४०)। श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् (सू० ३।४१)। कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् (३।४२)। बहिरकल्पिता वृत्तिर्महाविदेहा। शरीराद्बहिर्मनसो वृत्तिलाभो विदेहा नाम वृत्तिधारणा। सा यदि शरीरप्रतिष्ठितस्य मनसो बहिर्वृत्तिमात्रेण भवति, सा कल्पितेत्युच्यते। या तु शरीरे निरपेक्षा, बहिर्भूतस्यैव मनसो बहिर्वृत्तिः, सा खल्वकल्पिता तत्र कल्पितया साधयन्ति। अकल्पितां महाविदेहामिति, यया परशरीराण्याविशन्ति योगिनः। ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं, क्लेशकर्मविपाकत्रयं रजस्तमोपूर्णं, तस्य क्षयो भवति (सू० ४३, व्यासभाष्यं च)। स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः (सू० ४४)। भूतानां स्थूलादिषु पञ्चसु रूपेषु संयमात् तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति। तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य संकल्पानुविधायिन्यो प्रकृतयो भवन्ति (सू० ४४, भाष्यम्)। ततोऽणिमादिप्रादुर्भावः कायसंपत् तद्धर्मानभिघातश्च (सू० ३।४५)। अणिमादयः प्रसिद्धाः।

---

१ मातृकायामत्र ग्रन्थपातचिह्नं ( बिन्दुमालिका ) वर्तते। वाक्यद्वयपरिमितो ग्रन्थपातः स्यादिति भाति।

२ सर्वमेतत् ३।२८ सूत्रस्थव्यासभाष्ये पदशः वर्तते।

रूपलावण्यबलवज्रसंहननानि कायसंपत् (सू० ३।४६)। एकदा बहुशरीरग्रहणं चेत्येके। तद्धर्मानभिघातः। पृथिवी मूर्त्या न रुणद्धि योगिनः शरीरादिक्रियाम्। शिलामप्यनुविशति। नापः क्लेदयन्ति। नाग्निर्दहति। न वायुरीरयति, परिणामी वहति च। अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः, सिद्धानामप्यदृश्यो भवति। ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमात् इन्द्रियजयः (सू० ३।४७)। ततो मनोजवित्वं विकरणाभावः प्रधानजयश्च। कार्यस्यानुत्तमो गतिलाभो मनोजवित्वम्। विकरणं विकारप्राप्तिः। तदभावः विकरणाभावः। विदेहानामिन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभः। सर्वप्रकृतिविकारवशित्वं प्रधानजयः। इत्येतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते। एताश्च करणस्वरूपपञ्चकजयादधिगम्यन्ते (सू० ४८, भाष्यम्)॥

स्मृतं चैतद्विस्तृत्य मार्कण्डेये। संवादोपयोगि किंचिल्लिख्यते[1]—

इत्थं योगी यताहारः प्राणायामपरायणः।
जितां जितां शनैर्भूमिमारुहेत् तु यथा गृहम्॥
शब्दादिभ्यो निवृत्तानि यदाक्षाणि यतात्मभिः।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः॥
योगयुक्तः सदा योगी लघ्वाहारो जितेन्द्रियः।
सूक्ष्मास्तु धारणाः सप्त भूराद्या मूर्ध्नि विन्यसेत्॥
धरित्रीं धारयेद्योगी गन्धसौक्ष्म्यं प्रपद्यते।
आत्मानं मन्यते तद्वन्द्वधं च प्रजहाति सः॥
तथैवाप्सु रसं सूक्ष्मं तद्वद्रूपं च तेजसि।
स्पर्शं वायौ तथा तद्वद्बिभ्रतस्तस्य धारणाम्॥
व्योम्नः सूक्ष्मप्रवृत्तस्य शब्दं तद्वज्जहाति सः।
मनसा सर्वभूतानां मनस्याविशते यदि॥
मानसीं धारणां बिभ्रन्मनःसौक्ष्म्यं जहाति सः।
तद्वद्बुद्धिमशेषाणां सत्त्वानामेत्य योगवित्।

---

१ ± मार्कण्डेयपुराण, अ० ३९, श्लो० ३८–४१, अ० ४०, श्लो० १५–२२, २५।

परित्यजति संप्राप्य बुद्धिसौक्ष्म्यमनन्तरम् ॥
एतासां धारणानां तु सप्तानां सौक्ष्म्यमाप्तवान् ।
दृष्ट्वा दृष्ट्वा ततः सिद्धिं त्यक्त्वा त्यक्त्वा परां भजेत् ॥
एतान्येव च संधाय सप्त सूक्ष्माणि पार्थिव ।
भूतादीनां वशीभावः सद्भाववज्ञस्य जायते ॥

इति । विष्णुपुराणे च[1]—

प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतैस्ततः कुर्यात् स्थितं चेतः शुभाश्रये ॥
तद्रूपप्रत्ययायैका संततिः सान्यनिःस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पद्यते नृप ॥

अयमर्थः । ब्रह्मरूपप्रत्ययात्मिका संततिः प्रवाहः । सा विषयान्तरास्पृष्टा सती ध्यानमित्युच्यते । तथा—

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ॥

इति । ब्रह्मणः कल्पनाहीनं ध्येयध्यानध्यातृभेदशून्यमिति । मुक्तावेव स्वयंप्रकाशो ब्रह्मीभावः । शरीरपातोत्तरकाला च मुक्तिरित्यतो वाक्याद्गम्यते ॥ १८ ॥

ब्रह्मस्थितानां लक्षणमुपसंहरति—

न प्रहृष्येत् प्रियं प्राप्य नोऽप्रियं प्राप्य चोद्विजेत्[2] ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः[3] ॥ १९ ॥

प्रोक्तयुक्त्या ब्रह्मणि स्थितः ब्रह्मवित् प्रत्यभिज्ञतात्मस्वरूपः । असंमूढो विगतमिथ्याज्ञानः । स्थिरा कर्मोपभोगक्षपणैकतत्परा बुद्धिर्यस्य । प्रियं ब्राह्मणादिदेहं प्राप्य न प्रहृष्येत् । अप्रियं श्वपाकादिदेहं च

---

१ विष्णुपुराण, अंश ६, अ० ७, श्लो० ४५, ८९–९० ।

२ 'नोद्विजेत् प्राप्य चाप्रियम्' इति द्वितीयचरणस्य प्रचलितपाठः । 'नो द्वेष्टि प्राप्य चाप्रियम्' इति गोण्डलमातृकायाम् ।

३ 'स्थितिः' इति कलकत्तामातृकायाम् ।

प्राप्य नोद्विजेत् । अथ च 'मात्रास्पर्शास्तु कौन्तेय (२।१५)' इत्यत्रोद्दिष्टमात्रास्पर्शसहनस्य लक्षणीयस्यानुगमे स्पष्ट एवार्थः ॥ १९॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्[1] सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमव्ययम[2]श्नुते ॥ २० ॥

यत् सुखं सुखशब्दवाच्यं मनसोऽनुकूलवेदनीयमस्ति तत् सुखम्, बाह्याबाह्येन्द्रियग्राह्याश्च ते स्पर्शाः शब्दादयो विषयाः, तेषु असक्तः आत्मा यस्य सः, योगसिद्ध्यर्थं यमनियमसेवी, स्वयमेव विन्दते । स पुरुषः ब्रह्मणि योगेन संयमाभ्यस्तेन चित्तवृत्तिनिरोधेन युक्तो योजित आत्मा येन सः । अव्ययमक्षयं सुखं मोक्षमश्नुते ॥ २० ॥

एतद्व्यतिरेकमाह—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २१ ॥

आदिमत्त्वादप्राप्तौ प्राप्तौ वा अनादिदुःखम् । अन्तवत्त्वाद्विनाशशङ्कादुःखम् ॥ २१ ॥

शक्नोतीहैव यः सोढुं प्राक्छरीरविमोचनात्[3] ।
कामक्रोधोद्भवं वेगं[4] स योगी[5] स सुखी नरः[6] ॥ २२ ॥

य इहैवास्मिन्नेव जन्मनि देहपातादर्वाक् देहस्थितिपर्यन्तं कामोद्भवं वेगं, अप्राप्ते प्रार्थनारूपम् । क्रोधोद्भवं वेगं, प्राप्तस्य नाशे चित्तज्वलनरूपं, सोढुं शक्नोति । स एवंविधो योगी योगारूढो भवत्येव सुखी, अव्ययस्य मोक्षसुखस्य भाजनं भवति ॥ २२ ॥

---

१ 'यः सुखम्' इति प्रायः काश्मीरपाठः ।
२ '°मक्षय°' इति प्रचलितपाठः । भास्करेणायं श्लोको न पठितः ।
३ '°विमोक्षणात्' इति प्रचलितपाठो गोण्डलमातृकायाम् ।
४ 'कामोत्थवेगानुरोधः' इति भास्करपाठः ।
५ 'युक्तः' इति प्रचलितपाठो भास्करेण पठितः ।
६ 'मतः' इति काश्मीरपाठो भास्करवर्जम् ।

तदवस्थामाह—

अं[1]न्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः।
स[2] पार्थ परमं योगं ब्रह्मभूतोऽधिगच्छति ॥ २३ ॥

बाह्यस्पर्शेष्वसङ्गादन्तःसंयमेनैव भूमिजयेषु सुखं यस्य सः। तथैवान्तर्जितायां भूमिकायामेवारामो भोगार्थं विश्रामो यस्य। तथैवान्तरेव ज्योतिः प्रज्ञालोको यस्य सः। शेषं स्पष्टम् ॥ २३ ॥

लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः।
भि[3]न्नद्वैता महा[4]त्मानः सर्वभूतहिते रताः ॥ २४ ॥

ऋषयो यथार्थदर्शिनो योगिनः। क्षीणं तासु तासु भूमिषु संयमेन क्षपितं कल्मषं कर्मबन्धनं यैः। छिन्नं प्रकाशावरणक्षयाद्विगतं द्वैतं संशयविपर्ययज्ञानं येषां ते। महात्मानः, प्रधानजयपर्यन्तया योगसिद्ध्या महत्त्वं स्वातन्त्र्यं प्राप्त आत्मा येषाम्। अत एव सर्वभूतहिते रताः। निर्वाणं प्रशान्तं ब्रह्म परं तत्त्वं लभन्ते ॥ २४ ॥

एतदेव विशिनष्टि—

कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।
अं[5]भितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २५ ॥

यतीनां निर्जितेन्द्रियग्रामाणाम्, तथा यतं संयमनिश्चलीभूतं चेतो येषाम्। अभितः सर्वेषु भूतेषु महत्त्वेन व्यापकत्वेन विदितः प्रकाशावरणक्षयाज्जातः आत्मा ब्रह्मस्वरूपो यैः, तेषां विदितात्मनां योगिनाम् ॥ २५ ॥

---

१ 'योऽन्तः°' इति प्रचलितपाठो भास्करानुसृतः।

२ 'स योगी ब्रह्मनिर्वाणं' इति प्रचलितपाठस्तृतीयचरणस्य।

३ 'छिन्न°' इति प्रचलितपाठो गोण्डलमातृकायामिहैव टीकायां च।

४ 'यतात्मानः' इति प्रचलितपाठः, प्रायः काश्मीरपाठोऽपि।

५ 'सर्वतो' इत्यभिनवगुप्तपाठः।

संयमस्वरूपमेवाह—

स्पर्शान् कृत्वा वहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २६ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २७ ॥

सुप्रकाशार्थमिदम् ॥ २६ ॥ २७ ॥

एवं चित्तनिरोधार्थे योगे प्राणायामाद्यभ्याससाध्ये, ईश्वरप्रणिधानाद्वा इति द्वितीयमुपायमासूत्रयति—

भोक्तारं यज्ञतपसां सर्वभूतमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २८ ॥

मां पूर्वोद्दिष्टं वासुदेवाख्यं परं निर्वाणं ब्रह्मशब्देनोच्यमानं, यज्ञानामुक्तरूपाणां, तपसां श्रुतिचोदितानां क्रियाणां ब्रह्मार्पणप्रकारेणानुष्ठेयानां, भोक्तारम्, सर्वेषां भूतानां प्रकृतिविकृतीनां महान्तमनन्यापेक्षिणमीश्वरं सर्गस्थितिप्रलयेषु प्रवृत्तिनिवृत्तिसमर्थम् । सर्वेषां भूतानां सुहृदं हितोपदेशकं, ज्ञात्वा शान्तिमृच्छति । एतेनादिविद्वान् क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषो निर्माणकायमधिष्ठाय संप्रदायप्रद्योतकोऽनुग्राहकश्चेति परमेश्वरलक्षणं सर्वं संगृहीतम् ॥ २८ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

१ योगसूत्र, १।२३।
२ योगसूत्र, १।२४।

# ॥ षष्ठोऽध्यायः ॥

अतीतानन्तराध्याये हि योगधारणास्तत्फलं च प्रपञ्चयितुं 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः (५।२) इति यदुपक्रान्तं तत्र संन्यासयोगशब्दयोरनिर्वचनादर्जुनस्य चतुर्थाश्रमे कर्मसंन्यासशङ्कानिवारणार्थं—

श्रीभगवानुवाच ।

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च[1] योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

कर्मणः फलमनाश्रितः, फलासङ्गं त्यक्त्वा । कार्यं श्रुतिचोदितमवश्यकरणीयं, कर्म यः करोति । स एव यत्र काप्याश्रमे वर्तमानः पुरुषः संन्यासी च, कर्म कुर्वन्नेव फलत्यागात्, संन्यासिशब्दवाच्यश्च भवति, योगी च युक्त्या ज्ञानपूर्वं कर्मानुष्ठानाद्योगिशब्दवाच्यश्च भवति । चकारद्वयमेकस्यैवैकदा द्वावेवानुष्ठातुं समुच्चयार्थम् । न निरग्निर्न चाक्रियः, अग्नित्यागात् कर्मत्यागाच्च संन्यासिशब्दवाच्यो न भवति ॥ १॥

एवं संन्यासिशब्दार्थं निरूपयित्वा योगिशब्दार्थमपि निरूपयति—

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥**

इति प्रागुक्तनीत्या, यं संन्यासं कर्मफलत्यागार्थकमाहुः । तं कर्मणां क्रियमाणानां ब्रह्मणि सम्यक्तया न्यासाद्योजनात् योगं योगशब्दार्थकं विद्धि । कर्मयोगमेवोक्तनीत्या संन्यासशब्दार्थं जानीहीत्यर्थः । अत्र हेतुमाह । हि यस्मात्, न असंन्यस्तः संकल्पः फलस्पृहा येनेदृशः कश्चन योगी ज्ञानसमुच्चयानुष्ठाता भवति । अथ च संयमेन यं संन्यासं जित्वा वशीकृतायाः भूमेरुत्तरभूमिविजगीषया त्यागमाहुस्तं योगं चित्तवृत्तिनिरोधाख्यं जानीहि । न असंन्यस्तोऽनिरुद्धः संकल्पः चित्तवृत्तिर्येनेदृशः कश्चन योगी योगाभ्यासी भवतीत्यर्थः ॥ २ ॥

---

१ 'स योगी' इति भास्करपाठः ।

इत्थमेव प्रपञ्चयति—

आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते ।
आरूढस्य[1] तु तस्यैव शमः कारणमुच्यते ॥ ३ ॥

योगं कर्मणो ज्ञानसमुच्चययुक्तिं, आरुरुक्षोः वर्णाश्रमोक्तं कर्मैव कारणम् । योगारूढस्य चरमनिष्ठां प्राप्तस्य, शमः संकल्पविकल्पसंक्षोभक्षयः कारणम् । संकल्पविकल्पसंक्षोभैस्तावत्[2] शारीरिककर्मवत् श्रुतिचोदितमपि कर्मानुवर्तत एव । ततः परं बहिःसंवेदनाभावे बाह्येन्द्रियव्यापारोपरमवत्, श्रौतस्मार्तानामप्युपरम इत्युपोद्घाते निर्णीतमेव । अथ च मुनेर्मननशीलस्य योगमारुरुक्षोः संयमेन पूर्वां जित्वोत्तरां भूमिमाक्रमितुमिच्छोः कर्मयोगाङ्गाष्टकस्य यमनियमादेः सेवनं कारणं साधनमुच्यते । योगारूढस्याभ्यासदार्ढ्यात् प्रधानजयपर्यंतं योगमधिरूढस्य अर्थवत्त्वसंयमे 'नैव कुर्वन्न कारयन्' इतीत्थंप्रकारः शमः कारणमुच्यते ॥ ३ ॥

योगारूढं लक्षयति—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते[3] ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

आविर्भूतेन्द्रियजयस्य ग्रहणादिपञ्चकसंयमार्थः ज्ञानकर्मसमुच्चयार्थश्च सुगम एव ॥ ४ ॥

अत्र श्रद्धां जनयति—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

आत्मना संयमस्थिरीकृतेन मनसा आत्मानं समुद्धरेत् । पूर्वां पूर्वां

---

१ 'योगारूढस्य तस्यैव' इति प्रचलितपाठः काश्मीरपाठश्च । आनन्दवर्धनेन टीकायां स एव स्वीकृत इति भाति ।

२ मातृकायां "संक्षोभं तावत्' इति लिखितम् ।

३ 'न कर्मस्वनुषज्जति' इत्यभिनवगुप्तपाठः । 'सर्वकर्मसु सज्जते' इति कलकत्तामातृकायाम् ।

भूमिं जित्वा उत्तरामुत्तरां प्रापय्य प्रकृतिपृथग्भूतं कैवल्यं नयेदिति। शेषं स्पष्टम् ॥ ५ ॥

आत्मनो बन्धुरिपुतां दर्शयति—

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

जितात्मनः प्रशान्तस्य पर[1]मात्मसमा मतिः।
शीतोष्णसुखदुःखेषु तथा मानाव[2]मानयोः ॥ ७ ॥

परात्मसु परदेहे स्वदेहे च समा तुल्या मतिर्भवति। स्मृतं च—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधारय।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

॥ ६ ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

योगी दृढाभ्यस्तयोगः। विजितेन्द्रियः ग्रहणादिपञ्चकसंयमवान्। कूटस्थः मनोऽहंकारबुद्धीनां परतत्त्वावलम्ब(भ)नेन शैलशिखर इवोच्चपदे निर्लेपे स्थितः। शास्त्रात् पदार्थावधारणं ज्ञानं, [[3]स्वात्मना साक्षात्कारो विज्ञानं,] ताभ्यां तृप्तः, इतरस्पृहाहीनः, आत्मा अन्तःकरणं यस्येदृशः, क्षीणक्षेतव्यः ज्ञातज्ञेयः। समलोष्टाश्मकाञ्चनः, बहिःसंवित्तिविरहेण हानोपादानोपेक्षास्थाने निर्विकारः। युक्तः परब्रह्मणि योजित इत्युच्यते ॥ ८ ॥

---

१ 'परात्मसु समा मतिः' इति गोण्डलकलकत्तामातृकयोः काश्मीरटीकासु च पाठः। आनन्दवर्धनेनापि टीकायां स एव स्वीकृतः।

२ 'मानापमानयोः' इति प्रचलितपाठः।

३ अत्र लेखकस्य दृष्टिभ्रमाज्जाता त्रुटिः ३।४६ श्लोकस्थटीकानुसारं पूरिता।

संयमात् परतत्त्वावलम्भनेन फलं संवेदनाभावमेवाह—

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

सुहृत्स्वभावतः सहृदयः । मित्रं कारणवशात् संपन्नप्रीतिः । अरिः कारणवशात् द्वेष्टा । उदासीनः, नारिः न मित्रम् । मध्यस्थः कारणवशान्मित्रत्वे शत्रुत्वे च संभाव्यः । द्वेष्यो जातिवैरिः । बान्धवाः मातुलपितृव्यादयो ज्ञातयश्च । साधवः सदाचाराः, पापा दुराचाराः, एतेषु समबुद्धिर्योगधारणावशात् सामरस्यप्राप्त्या सौहार्दादिज्ञानशून्यः, विशिष्यते ब्रह्मप्राप्तिविशिष्टो भवतीत्यर्थः ॥ ९ ॥

तदेवं मनोबुद्ध्यहंकाराणां ध्यानधारणासमाधिभिर्वृत्तिनिरोधात् प्राप्तायामस्यां परमयोगावस्थायां स्थिरपदप्राप्तये सदुपायं यमनियमासनादिप्रकारकं बहिरङ्गमाह—

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

यतं निरुद्धवृत्ति चित्तं यस्येदृगात्मा यस्य सः, आत्मनि समाहितचित्त इत्यर्थः । निराशीः शब्दादिविषयस्पृहाशून्यः । अत एवापरिग्रहः, ममेदमित्यभिमानरहितः ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

आसनजयात् द्वन्द्वानां शीतोष्णादीनामनभिघात इति । तत्रासने उपविश्य स्वस्तिकपद्मादिकं शारीरमासनं बद्ध्वा, यता निरुद्धा चित्तस्य क्रिया संकल्पविकल्पौ, इन्द्रियाणां क्रिया श्रवणादिकं वचनादानादिकं च येनेदृशः । आत्मनो, देहेन्द्रियादिसंघातान्तर्गतस्य जीवस्य,

१ मातृकापाठस्तु – 'सुहृन्मित्रावुदासीनमध्यस्थौ द्वेष्य°' इति ।

विशुद्धये, समरसत्वापादनाय, योगमष्टाङ्गं युञ्जीत समादधीत, इति ॥ ११ ॥ १२ ॥

बद्धासनस्य चित्तैकाग्र्यसाधनं शरीरसंस्थानमाह—

समं[1]कायशिरोग्रीवं धारयन्नचलं[2]ः स्थितः।
संप[3]श्यन् नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥

कायः कण्ठादधःशरीरं च शिरश्च ग्रीवा च सममृजु धारयन् ॥ १३ ॥

एवमासनबन्धमुक्त्वा यमनियमादिमेवाह—

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

युक्तो योगमभ्यसितुं प्रवृत्तः। प्रशान्तो हिंसादिभ्यो निवृत्तः आत्मान्तःकरणं यस्य, इत्यहिंसासत्यास्तेयानां ग्रहणम्। तथा प्रशान्तो निर्मल आत्मा यस्येति शौचसंतोषयोर्नियमयोर्ग्रहणम्। विगतभीः, द्वन्द्वसहनात् तपसो ग्रहणम्। ब्रह्मचारिव्रते स्थितः इत्युपस्थसंयमस्य ब्रह्मचर्यस्य स्वाध्यायाख्यस्य च नियमस्य ग्रहणम्। मनः संयम्य विषयग्रहणान्निवर्त्य इत्यपरिग्रहस्य यमस्योक्तिः। मच्चित्तो, मयि परमेश्वरे प्रणिहितचेताः, अहमेव परः प्राप्यो यस्येदृशः, आसीत इतीश्वरप्रणिधानम्। तथा च योगसूत्रम् (२।३०, ३२)—

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः।
शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः।

इति ॥ १४ ॥

युञ्जन्नेवं सदात्मानं योगी निय[4]तमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

---

१ 'समं' इति प्रचलितपाठः। स एवानन्दवर्धनेनापि टीकायां स्वीकृतः।

२ '॰न्नचलं स्थिरः' इति प्रचलितपाठः, अभिनवगुप्तपाठश्च।

३ 'संप्रेक्ष्य' इति प्रचलितपाठः। 'स्वं' इतिस्थाने कलकत्तामातृकायां 'च' इति पाठो वर्तते।

४ 'मद्भक्तोऽनन्यमानसः' इति द्वितीयचरणस्य प्रायः काश्मीरपाठः। 'नान्य॰' इति गोण्डलपाठः।

एवमष्टाङ्गयोगसेवनेन सदा प्रत्यहं, न तु मध्ये मध्ये विच्छिद्य, आत्मानं युञ्जन् समाधिस्थं कुर्वन् ॥ १५ ॥

बाह्यमुपायान्तरमप्याह—

योगोऽस्ति नैवात्यश्नतो न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य नातिजागरतोऽर्जुन ॥ १६ ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

॥ १६ ॥ १७ ॥

योगस्य परिपाककालमाह—

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

तदा तस्मिन् काले युक्तो योगसिद्धिप्राप्त इत्युच्यते ॥ १८ ॥

इत्थंभूतस्य स्वरूपमुपमयाह—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनि ॥ १९ ॥

आत्मनि संयमजयात् प्रकृतेः पृथग्भावनार्थं योगं युञ्जतः योगिनः
३ सोपमा स्मृता येनोपमाप्रकारेण निवातस्थो दीपो नेङ्गते ॥ १९ ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवनात् ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

योगसेवनान्निरुद्धं चेतो यत्रोपरमते, प्राप्तप्राप्यं विश्रान्तं सत् ततः परं जेतव्याभावात् प्रयत्नमुत्सृजति । यत्र च परस्य करणस्याभावा-
३ दात्मनैव करणेन, परस्य क्रिययेप्सिततमस्य कर्मणोऽप्यभावादात्मानं पश्यन् दर्शनक्रियया प्राप्यं कुर्वन् । एवं परस्या भूमिकाया अभावादा-

---

१ प्रथमचरणस्य प्रचलितपाठः – 'नात्यश्नतस्तु योगोऽस्ति' इति ।
२ चतुर्थचरणस्य प्रचलितपाठः – 'जाग्रतो नैव चार्जुन' इति ।
३ 'योगसेवया' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते ।

त्मन्येव विश्रामभूमौ तुष्यति विश्राम्यति । तं योगसंज्ञितं विद्यादिति परेणान्वयः । एतेन कर्तृकरणकर्माधिकरणानामैकात्म्यं दर्शितम् ॥ २० ॥

सुखमात्यन्तिकं यत्त[1] बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्च्यवति[2] तत्त्वतः ॥ २१ ॥

यत्रायं योगी आत्यन्तिकं सुखं दुःखासंमिश्रम् । अतीन्द्रियम्, इन्द्रियसुखादतिशयितं बुद्धिग्राह्यं वेत्ति । अयं योगी यत्र योगे स्थितः न चैव च्यवति, नाधः पतति । तं योगं योगसंज्ञितं विद्यात् ॥ २१ ॥

यं लब्ध्वा नापरं लाभं मन्यते चाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥

गुरुणापि प्रबलेनापि आध्यात्मिकादिदुःखेन न विचाल्यते । तदुक्तं—

कल्पान्तवायवो वान्तु यान्तु चैकत्रमर्णवाः ।
तपन्तु द्वादशादित्या नास्ति निर्मनसां क्षतिः ॥

॥ २२ ॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

दुःखो दुःखहेतुभूतश्चासौ संयोगः, पुरुषस्य महाभूतादिप्रकृत्यन्तैः प्रकृतिविकारैस्तत्त्वैः संबन्धः, तस्य वियोगं विश्लेषणं तं पूर्वश्लोकद्वयोक्तविशेषणविशिष्टं योगसंज्ञितं अष्टाङ्गयोगसंज्ञं जानीयात् । अनिर्विण्णचेतसा, नोद्विग्नमनसा सदाभ्यासपरेण, सोऽयं योगः परमं निःश्रेयसप्राप्तिहेतुः, अवश्यं निश्चयेन योक्तव्यः ॥ अत्रायं वाक्यार्थः— परिणामतापसंस्कारदुःखैर्[3]गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः । सर्वस्यायं रागानुविद्धः चेतनाचेतनसाधनाधीनः अन्नपानादिसुखानुभवः इत्यस्ति रागजः कर्माशयः । द्वेष्टि दुःखसाधनानि मुह्यति चेति

---

१ 'यत् तत्' इति प्रचलितपाठोऽभिनवगुप्तटीकायां दृश्यते ।

२ '०श्चलति' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते ।

३ पातञ्जलयोगसूत्र, २ । १५ ।

द्वेषमोहकृतोऽप्यस्ति कर्माशयः। विषयसुखं चाविद्येत्युक्तम्। या भोगेष्विन्द्रियाणां तृप्तिरुपशान्तिस्तत् सुखम्। या लौल्यादनुपशान्तिस्तत् दुःखम्। न चेन्द्रियाणां भोगाभ्यासेन तृप्तिः कर्तुं शक्या, यतो सुखस्य भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणामित्यनुपायः भोगाभ्यासः। इत्येषा परिणामदुःखता सुखावस्थायामपि योगिनं क्लिश्नाति। सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्ता[पा]नुभव इति द्वेषजः कर्माशयः। सुखसाधनानि प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते। ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति। स कर्माशयो लोभान्मोहाच्चेति तापदुःखता। सुखानुभवात् सुखसंस्काराशयः दुःखानुभवादपि दुःखसंस्काराशयः इत्येवं कर्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति संस्कारदुःखता। तथा प्रकाशवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रा भूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवारभन्ते। रूपातिशयाद्वृत्त्यतिशयाच्च परस्परेण विरुध्यन्ते। सामान्यानि त्वतिशयैः सह प्रवर्तन्ते। एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्तीति गुणवृत्तिविरोधदुःखता। इत्यतो दुःखमेव सर्वं विवेकिनः इति। तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या। तस्याश्च सम्यग्दर्शनमभावहेतुरिति। तत्र दुःखबहुलः संसारो हेयः। प्रधानपुरुषयोः संयोगो हेयहेतुः। संसारस्यात्यन्तिकी निवृत्तिर्हानम्। हानोपायः सम्यग्दर्शनम्। इत्यादियोगानुशासनोपदेशात् पुरुषस्य प्रधानाद्यैर्यः संयोगः संसरणहेतुः तस्य वियोगं संयमेन। तं तु भूमिजयक्रमात्। विश्लेषणं सर्वेभ्यः प्रकृतिविकारेभ्यः प्रधानपर्यन्तेभ्यः पृथग्भावं योगसंज्ञितमाहुः। सिद्धान्तितं चात्र—बुद्धिपुरुषसंयोगाभावे आत्यन्तिको दुःखोपरम इति॥ २३॥

एवं लक्षणमुक्त्वा योगसिद्ध्युपायमाह—

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः॥ २४॥

---

१ एतत् सर्वं २।१५ सूत्रस्य व्यासभाष्यत उद्धृतम्, क्वचित् संक्षिप्तम्।
२ द्रष्टव्यं २।१५ सूत्रे व्यासभाष्यम्।

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥

धृतिर्योगधारणा ॥ २४ ॥ २५ ॥

यतो यतो निःसरति मनश्च[1] चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं[2] नयेत् ॥ २६ ॥

चञ्चलं वायुवत् दुर्ग्रहम् । अस्थिरं प्रार्थितेऽपि वस्तुनि न चिरं तिष्ठतीति ॥ २६ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तरम्[3] ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्[4] ॥ २७ ॥

प्रशान्तं विषयसुखस्पृहाक्षोभहीनं मनो यस्य तम् ॥ २७ ॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः[?] ।
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति[5][6] ॥ २८ ॥

स्पष्टम् ॥ २८ ॥

इत्थं सिद्धनिरुत्तरसंयमस्य स्वरूपमाह—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते[7] योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

योगेन प्रधानजयान्तेन परमयोगेन संयमेन युक्तः परमात्मनि योजित

---

१ 'मनश्च चलम्' इति मूले पाठः । टीकायां तु 'मनश्चञ्चलम्' इति प्रचलितपाठः स्वीकृतो दृश्यते ।

२ 'शमं नयेत्' इत्यभिनवगुप्तपाठः ।

३ '°उत्तमम्' इति प्रचलितपाठः, प्रायः काश्मीरपाठश्च । चतुर्थचरणस्य भास्करपाठस्तु—'यस्माद्योगिनमुत्तमम्' इति ।

४ 'विगतकल्मषः' इति प्रचलितपाठः ।

५ '°संस्पर्श°' इति प्रचलितपाठः ।

६ '°मत्यन्तं सुखमश्नुते' इति प्रचलितपाठः ।

७ 'पश्यतो' इति भास्करपाठः ।

आत्मा येनेदृशः। सर्वत्र समं, हेयोपादेयोपेक्षाबुद्धिस्थाने निर्विकारं, दर्शनं ज्ञानं यस्य सः। आत्मानं स्वं कर्मभोगार्थं संक्रमयुक्त्या सर्वेषु भूतेषु चतुर्दशभूतसर्गप्राणिषु स्थितं वर्तमानमीक्षते। च पुनः आत्मन्यस्मिन्नेव जीवशरीरे। सर्वभूतानि पृथिव्यादिप्रधानान्तानि योगानुशासनोक्तेन संयमप्रकारेण साक्षात्करोति ॥ २९ ॥

एवं संप्राप्तपरसमाधेरात्माविषयां स्थितिं लक्षयित्वा परमात्मविषयां वृत्तिं ईश्वरप्रणिधानहेतुकामाह—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

यः परमयोगी सर्वत्र संयमयुक्त्या सर्वेषु भूतेषु वर्तमानं मां वासुदेवमन्तर्यामिणं परमेश्वरं सर्वानुग्राहकं सर्वत्र पश्यति सदाधारेणैव प्रवर्तमानं पश्यति। जडानां स्वयंप्रवृत्त्यसंभवात्। तस्याहं न प्रणश्यामीत्यादि। मम सायुज्यमेवायं प्राप्तः इत्यर्थः ॥ ३० ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स[१] योगी मयि वर्तते ॥ ३१ ॥

एकत्वमास्थितः कर्मभोगार्थं नानाशरीरस्थोऽप्यहमत्रैक एव न्यायभूषणोक्तयुक्त्या सर्वव्यापी भोक्तेति मनसा धारयन्, यो मां परमेश्वरं भजति। स योगी सर्वेषां कर्मभोगार्थं संक्रान्तानां तेषां तेषां शरीरिणां प्रकारैः कायिकैर्वाचिकैश्च वर्तमानोऽपि, तत्तद्देहाश्रयं व्यापारं कुर्वन्नपि, मयि वर्तते मत्सायुज्यं प्राप्तः। व्याख्यातं चेतत्—संस्कारसाक्षात्करणात् पूर्वजातिपरिज्ञानमिति सूत्रे (३।१८)। परत्राप्येवमेव संस्कारसाक्षात्कारात् परजातिसंवेदनमिति ॥ ३१ ॥

उक्तमर्थं सिद्धान्तयति—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

स्पष्टम् ॥ ३२ ॥

---

१ चतुर्थचरणस्य भास्करपाठः—'मय्यैवासौ च वर्तते' इति।

तदेवमस्य संयमयोगस्य दुष्करतां प्रतिपादयितुं—

अर्जुन उवाच।

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।**
**एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं परांम्[1] ॥ ३३ ॥**

परां स्थितिं प्रोक्तक्रमां सामरस्यरूपां मनसः चञ्चलत्वात् प्राप्यां न
३ संभावयामीत्यर्थः ॥ ३३ ॥

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥**

प्रमाथि प्रमथनशीलं। कृच्छ्रलब्धामपि भूमिकामुन्मार्गप्रवर्तनात्
त्याजयन् न च व्यावर्तयितुं शक्यं, अतो बलवत्, दुर्निरोधत्वात्।
३ दृढम्, अनेकपूर्वजन्माभ्यस्तेषु विषयेषु सक्तम् ॥ ३४ ॥

अथैतदुत्तरमभ्युपगमपूर्वं—

श्रीभगवानुवाच।

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥**

तथा च योगसूत्राणि। चित्तवृत्तिनिरोधो योगः (± १।२)। अभ्यास-
३ वैराग्याभ्यां तन्निरोधः (१।१२)। तत्र स्थितौ यत्नोऽभ्यासः (१।१३)।
दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् (१।१५)
इति ॥ ३५ ॥

**असंयतात्मना[2] योगो दुष्प्राप इति मे मतिः।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥**

न संयतो निरुद्धो आत्मा मनो येन तेन दुष्प्रापो योग इति मयापि
मन्यते। तु पुनः, वश्यात्मना निरुद्धचेतसा, यतता यत्नपूर्वमभ्य-
३ स्यता। उपायतः वैराग्यादिना योगसेवनादवाप्तुं शक्यः ॥ ३६ ॥

---

१ 'स्थिराम्' इति प्रचलितपाठः।

२ 'असंयतात्मने' इत्यभिनवगुप्तपाठः, कलकत्तामातृकायां च।

अभ्यासवैराग्ययोरतिदुःसाध्यत्वाद्योगस्य निष्ठां दुष्प्रापां मन्यमानः —

अर्जुन उवाच ।

अयतः[1] श्रद्धयोपेतो योगाच्चलितमानसः ।
लिप्समानः[2] सतां मार्गं प्रमूढो[5] ब्रह्मणः पथि ॥ ३७ ॥
अनेकचित्त[3]विभ्रान्तो[4] मोहस्यैव वशं गतः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३८ ॥

अयत इति नञ् अल्पभावे । अयतः, यत्नशैथिल्यादभ्यासपरिपाकं न प्राप्तः, अत एव योगाच्चलितमानसः परमं योगमप्राप्तः, किंतु उक्ताद्योगादवश्यं ब्रह्मप्राप्तिः स्यात् इति श्रद्धयोपेतो, न तु त्यक्तः । अत एव सतां योगिनां मार्गं ब्रह्मस्थितिं लब्धुमिच्छुः । ब्रह्मणः पथि, उपायरूपे मार्गे, प्रकर्षेण मुग्धः । अत्र हेतुः । अनेकचित्तः, नैकत्र चित्तं यस्य । विभ्रान्तो, न क्वापि लब्धस्थितिः । मोहस्यानात्मज्ञानस्य वशं गतः । हे कृष्ण योगसिद्धिमप्राप्य कां गतिं गच्छति ॥ ३७ ॥ ३८ ॥

कच्चिन्नोभयविभ्रंशाच्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विनाशं वाधिगच्छति ॥ ३९ ॥

कच्चिदितीष्टप्रश्ने । श्रद्धोपेतः पुरुषः, उभयस्य भोगापवर्गाख्यस्य विभ्रंशादलाभात्, छिन्नाभ्रमिव नश्यति । वायुविशीर्णो मेघो यथा न विनश्यति, पुनः संधानमाप्नोति, तथाऽयं किं प्राप्तायाः योगभूमेः

---

१ 'अयतिः' इति प्रचलितपाठो भास्करेणानुसृतः, कलकत्तामातृकायां च दृश्यते ।

२ 'लिप्स्यमानः' इत्यारभ्य 'वशं गतः' इत्यन्तं चरणचतुष्टयं काश्मीरपाठे अधिकम् ।

३ '॰चित्तो' इति सर्वकाश्मीरपुस्तकेषु, तथा आनन्दवर्धनटीकायामपि । '[ऽ]विश्रान्तः' इति प्रायः सर्वकाश्मीरपुस्तकेषु ।

४ '॰विभ्रष्टः' इति प्रचलितपाठः कलकत्तामातृकायाम् ।

५ 'विमूढो ब्रह्मणः पथि' इति चतुर्थचरणस्य प्रचलितः पाठो भास्करेण स्वीकृतः ।

संधानमेवाप्नोति । वा प्रश्ने । उताप्रतिष्ठः, संधानमवाप्तः । अभ्यस्तस्य योगस्य विनाशमपुनरुत्थानमेवाधिगच्छति ॥ ३९ ॥

एतं मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ४० ॥

त्वत्तः संसारपूर्वापरगतिवेदिनोऽन्यो द्वितीयः संशयस्यास्य च्छेत्ता न संभाव्यते इत्यर्थः ॥ ४० ॥

एतं संशयं छेत्तुं—

श्रीभगवानुवाच ।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४१ ॥

तस्य भोगापवर्गबीजभूतशुद्धाशुद्धचेतसः, इहामुत्रविनाशः नास्ति ।
३ हि यस्मात्, कल्याणकृत् कल्याणमीश्वरार्पणबुद्ध्या कृतं कर्म तत्कारी,
कश्चन पुरुषो दुर्गतिं न गच्छति ॥ ४१ ॥

मदर्थं कृतस्य कर्मणोऽक्षयत्वात् केवलं मृदुमध्याधिमात्रादितारतम्यात् कालविशेषापेक्षेति दर्शयति—

प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४२ ॥

अथवा योगिनामेव जायते धीमतां कुले ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४३ ॥

---

१ 'एतन्' इति प्रचलितपाठः, प्रायः काश्मीरपाठोऽपि । भास्करपाठस्तु मूलानुसारी ।

२ 'जातु' इति भास्कररामकविवर्जं प्रायः काश्मीरपाठः ।

३ 'पुण्यकृताम्' इति प्रचलितपाठोऽभिनवगुप्तेनानुसृतः, कलकत्तामातृकायां च वर्तते ।

४ 'कुले भवति धीमताम्' इति प्रचलितपाठः । 'जायते श्रीमतां कुले' इति रामकविपाठः । 'कुले भवति निर्मले' इति कलकत्तापाठः ।

तत्र तं बुद्धिसंयोगं लभते पूर्वदैहिकम्[1] ।
ततो भूयोऽपि यतते[2] संसिद्धौ[3] कुरुनन्दन ॥ ४४ ॥

यस्याः भूमिकायाः पतितस्तस्या एव बुद्ध्या ज्ञानेन संयोगं कृत्वा ततस्तस्या भूमेर्जयानन्तरं, भूयः पुनरपि उत्तरभूमिजयसिद्धौ यतते ॥ ४२ ॥ ४३ ॥ ४४ ॥

अत्र हेतुमाह—

पूर्वाभ्यासेन तेनैव ह्रियतेऽप्यवशोऽपि[4] सन् ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४५ ॥

अवशः, ब्रह्मप्राप्त्यासिद्धेर्बुध्यादिवशोऽपि सन्, तेनैव पूर्वाभ्यासेन प्राग्जन्मसंचितेन संस्कारेण ह्रियतेऽपि, तां तां भूमिकां प्रापय्य, परब्रह्म प्रति नीयते, इत्यपिशब्दस्यार्थः । तदेवं योगसिद्धेः श्रद्धैव परमोपाय इति श्रद्धां स्तौति । जिज्ञासुरिति । विवेकख्यात्या संयमात् समुदिते प्रज्ञालोके शास्त्रजं ज्ञानमपार्थकं सूर्ये दीपवदिति । योगानुशासनदृष्ट्या योगस्य जिज्ञासुः श्रद्धया ज्ञातुमिच्छुरपि । अपि शब्दाद्योगमनुष्ठातुमनारब्धोऽपि । शब्दब्रह्म, शास्त्रमतिक्रमते । अत्रेदं तात्पर्यम् । श्रद्धाशुद्धं हि यस्य चेतः तस्य प्रोक्तेन मन्दमध्यमतीव्रसंस्कारापेक्षाक्रमेण संयमेनावश्यं ब्रह्मप्राप्तिरिति । ततः परं ज्ञातव्यस्याभावः । शब्दब्रह्मणो ज्ञानसाधनस्य नापेक्षेति ॥ ४५ ॥

एतदेव सिद्धान्तयति—

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्[5]ततो याति परां गतिम् ॥ ४६ ॥

---

१ 'पौर्वदैहिकम्' इत्यभिनवगुप्तपाठः । 'पौर्वदेहिकम्' इति प्रचलितपाठः ।

२ 'यतते च ततो भूयः' प्रचलितपाठः ।

३ 'सिद्धये' इति गोण्डलपाठः ।

४ 'ह्रियते ह्यवशोऽपि' इति प्रचलितपाठः । 'क्रियते ह्यवशोऽपि' इति गोण्डलपाठः ।

५ '॰जन्मसंशुद्ध॰' इति कलकत्तापाठः ।

तत्र तं बुद्धिसंयोगं लभते पूर्वदैहिकमित्युक्तयुक्त्या प्रयत्नादेकस्मिन् जन्मनि परमपि जेतुं श्रद्धावान्, प्रयत्नादुद्योगाद्यतमानो योगमनुतिष्ठन्, अत एव संशुद्धकिल्बिषः, अधराधरभूमिजयात् प्रक्षालितान्तःकरणमलः, अनेकैर्जन्मभिः संसिद्धः, योगसिद्धिमारूढः, ततः परां गतिं याति, परं ब्रह्माधिगच्छति ॥ ४६ ॥

योगः, फलस्पृहां विना कर्मकरणयुक्तिः, योगश्चित्तवृत्तिनिरोधश्चेत्युभयार्थं योगिनं सर्वोत्कर्षेण स्तौति—

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योप्यधिको मतः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४७ ॥**

सुतीव्रस्यापि केवलस्य तपसो मुनीनां क्रोधादिना क्षयश्रवणाद्योगी, ज्ञानकर्मसमुच्चयानुष्ठाता संयमी, तपस्विभ्योऽधिकः श्रेष्ठः । ज्ञानिभ्यः विहितं कर्म संयमं च त्यक्त्वा ब्रह्मज्ञानपरेभ्योऽधिको योगी । कर्मिभ्यः ज्ञानसंयमं च विना केवलं यज्ञादिकं कर्म स्वर्गादिकामनया कुर्वद्भ्योऽधिको योगी । तस्माद्योगी भवार्जुन । सर्वेषामेषां फलस्य सान्तरायत्वं सान्तत्वं च, योगिनस्तु निर्विघ्नमक्षयं फलमित्युत्कर्षः । योगी भवेति बहुश उक्तस्य वक्ष्यमाणस्य ज्ञानकर्मणोः समुच्चयस्यानुष्ठानपरो भव । एतदनुष्ठानसिद्ध्यर्थमष्टाङ्गयोगाभ्यासी भवेति । ज्ञानकर्मसमुच्चयानुष्ठानोपदेशाद्युद्धोन्मुखो भवेत्यर्जुनं प्रति भगवन्नियोगः ॥ ४७ ॥

सर्वेभ्योऽपि योगेभ्यः परमेश्वरैकप्रणिहितचित्तो योगी प्रकृष्टतम इति दर्शयन्नध्यायार्थमुपसंहरति—

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४८ ॥**

यः श्रद्धावान्, अवश्यमीश्वरप्रणिधानोपचिताद्योगाद्ब्रह्मप्राप्तिः स्यादिति निश्चयवान्, मद्गतेनान्तरात्मना प्रतिपादितयुक्त्या संयमात् मदेकनिष्ठेन मनसा मां भजते, स सर्वेषामपि योगिनां ममातिशयितो योगी मतः । लक्षणीयायाः श्रद्धाया उद्देशोऽयमिति सिद्धम् । यमनियमा-

सनप्राणायामप्रत्याहारध्यानधारणासमाधयोऽष्टावङ्गानि योगस्येति[1] । यमादिपञ्चकं बहिरङ्गम् । ध्यानादित्रयमन्तरङ्गम् । तथाहि यमनियमैर्मनसो बाह्यगतीर्निरुध्य, आसनेन भौतिकपिण्डात्मनः, प्राणायामैश्च प्राणात्मनः, समरसत्वमभिसंपाद्य, प्रत्याहारेणेन्द्रियाणि वशीकृत्य, ध्यानेन बुद्धिधाम्नि मनो निवेश्य, धारणया यत्नं स्थिरीकृत्य युक्तस्य सतः, समाधिना च पुरुषप्रकाशसामीप्योपलब्धिस्थाने कैवल्यप्राप्तिहेतुसंप्रज्ञातयोगोपलब्धिरिति योगानुशासनवाक्यार्थसंग्रहः ॥ ४८ ॥
समाप्तमेतदुद्देशपर्व ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ षष्ठोऽध्यायः ॥ ६ ॥

१ योगसूत्र, २।२९।

## ॥ सप्तमोऽध्यायः ॥

ॐ श्रीगुरुभ्यो नमः । अथात्र लक्षणपर्वणि, श्रद्धावान् भजते यो माम् (६।४८) इति पूर्वाध्यायोक्तिसंबन्धेन ज्ञानकर्मसमुच्चयानुष्ठानोपायेन संयमेन परमोपेयस्य सर्वासां प्रकृतिविकृतीनामधिष्ठातुः परमेश्वरस्य स्वरूपं लक्षयितुं—

श्रीभगवानुवाच ।

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रितः[1] ।
असंशयं समग्रं मां यथा ज्ञास्यति तच्छृणु ॥ १ ॥

मयि परमेश्वरे आसक्तं, प्रोक्तक्रमेण संयमेन दृढीकृत्य निरुद्धं, मनो येन सः त्वं, योगमष्टाङ्गं युञ्जन्नभ्यस्यन्, मदाश्रितो मदेकशरणः, मां, वासुदेवं परमेश्वरं समग्रं वक्ष्यमाणेन प्रकृतिपुरुषकालेश्वराणामैकात्म्येन व्यक्ताव्यक्तकं, असंशयमन्योन्यविभिन्नार्थप्रतिपादकैः पृथक् प्रस्थानत्वाच्छास्त्रैरुत्पादितं संशयं दूरीकृत्य, यथा ज्ञास्यति, तथा मयोच्यमानं शृणु, सावधानमवधारय ॥ १ ॥

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा न[2] पुनः किंचिज्ज्ञातव्यमवशिष्यते ॥ २ ॥[3]

ज्ञानं शास्त्राद्यथार्थावबोधः । विज्ञानं स्वयं तत्साक्षात्कारः ॥ २ ॥

अत्र दुष्प्रापतामाह ।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

मनुष्याणां, कर्मभूमौ दुर्लभं जन्म प्राप्तवतां, सहस्रेषु मध्ये कश्चिदेकः, सिद्धये, जन्माभावरूपस्य फलस्य प्राप्तये, यतति, तदुपायमनुतिष्ठति ।

---

१ 'मदाश्रयः' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते ।

२ 'नेह भूयोऽन्यत्' इति प्रचलितपाठः भास्करेणानुसृतः ।

३ द्वितीयश्लोकानन्तरं भास्करः श्लोकार्धमधिकं पठति यथा—
'चिन्तनीयं यदुत्कृष्टं सत्त्वं तदुपदिश्यते' ।

यत्नेन सिद्धिं प्राप्तानामपि मध्ये कश्चिदेकः, शुको वा नारदो वेति प्रसिद्ध्या, मां वासुदेवं तत्त्वतः व्यक्ताव्यक्तात्मकत्वेन वेत्ति ॥ ३ ॥

व्यक्ताव्यक्तात्मकत्वमेव लक्षयति—

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥**

इयं—'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत' (२।१९) इति द्वितीयाध्यायोद्दिष्टा—

अजामेकां लोहितशुक्लकृष्णाम्[1] ।

इत्यादिश्रुतिस्मृतिप्रसिद्धा मे परमेश्वरस्य प्रकृतिः, सत्वरजस्तमसां साम्यावस्था, विश्वस्य मूलकारणं, कार्यकारणकर्तृप्रकारात्मिका, पारमेश्वर्यशक्तिः, वह्नेर्दाहकतादिरिव परमेश्वरादभिन्ना, अष्टधा—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त[2] ।

इति शासनाद्व्यक्ताव्यक्तत्वेन अष्टप्रकारा सती, भूमिरापोऽनलो वायुरिति भिन्ना भेदप्राप्ता—

प्रकृतेर्महांस्ततोऽहंकारस्तस्मादपि गणः षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि[3] ॥

तथा हि, स्थूलसूक्ष्मः प्रतीयते, इति न्यायात् क्रमेण तद्दर्शयति । भूमिर्गन्धतन्मात्रस्य प्रकृतेर्विकृतिः । आपो रसतन्मात्रस्य प्रकृतेर्विकृतिः । अनलो रूपतन्मात्रस्य प्रकृतेर्विकृतिः । वायुः स्पर्शतन्मात्रस्य प्रकृतेर्विकृतिः । खं शब्दतन्मात्रस्य प्रकृतेर्विकृतिः । मनः—

अभिमानोऽहंकारस्तस्माद्द्विविधः प्रवर्तते सर्गः ।
ऐन्द्रिय एकादशकः प्रवर्तते वैकृतादहंकारात् ॥
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्[4] ॥

इत्येतच्छास्त्रावेक्षया, मन इत्युपलक्षणात्, ऐन्द्रियकस्तन्मात्रश्च द्विविधोऽपि सर्गः अहंकारस्य प्रकृतेर्विकृतिः । बुद्धिरध्यवसायरूपं महत्तत्त्वं मूलप्रकृतेर्विकृतिः । अहंकारोऽभिमानरूपः बुद्धेर्महत्तत्त्वस्य

---

१ श्वेताश्वतरोपनिषद्, ४।५ । २ सांख्यकारिका, ३ ।
३ सांख्यकारिका, २२ । ४ ± सांख्यकारिका २४–२५ ।

प्रकृतेर्विकृतिः । मनःशब्देन एकादशेन्द्रियवर्गः, इन्द्रियसाहचर्यात् तन्मात्राणि चेत्यहंकारस्य विकृतिः, भेदः । बुद्धिर्महत्तत्त्वमव्यक्तस्य विकृतिः भेदः । अहंकारो महतो विकृतिः ॥ ४ ॥

अस्याः संज्ञान्तरेण स्वरूपमाह—

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

इयमुक्तप्रकारा प्रकृतिरपरा, वक्ष्यमाणायाः परप्रकृतेरन्या विलक्षणा जडा परतन्त्रा भोग्या कालतः परिणामिनी चेत्यर्थः । तु पुनर्व्यतिरेके, इतोऽस्याः प्रोक्ताया अपरायाः प्रकृतेरन्यां विशिष्टां चेतनां भोक्त्रीं स्वतन्त्रां नित्यां परां सर्वतत्त्वप्रेरिकां मे प्रकृतिं, कालरूपेण पुरुषरूपेण च क्षेत्रज्ञतां प्राप्तां, विद्धि । यया परया प्रकृत्या कर्त्र्या इदं सकलतत्त्वमयं जगद्धार्यते । कालप्रेरितजीवनिबद्धा हि सकलजगत्पदार्थस्थितिः । तथा चोक्तम्—

स्वदेहसाक्षिकं चैतत् सर्वस्य ज्ञातृचेष्टितम् ।
ज्ञात्रा नाधिष्ठितः कायो लुठत्येव हि लोष्टवत् ॥

इति ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं सर्वस्य[1] जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

एते मदीये परापरे प्रकृती योनिरुत्पत्तिकारणं येषामीदृशानि सर्वाणि भूतानि । भूमिरापोऽनलेतिप्रोक्तानि सन्ति, इत्युपधारय । अस्य हि सर्वस्य जगतः प्रकृतिविकृतिरूपेण परिणामं गच्छतस्तत्त्ववर्गस्य अहं परमेश्वर एव प्रभवस्तथा प्रलयः । मत्तः परमकारणात् सर्वं प्रादुर्भवति, मय्येव सर्वं लीयते चेत्यर्थः । दर्शिता चात्र चातुरात्म्ये[2] श्रुतिस्मृतिप्रमाणोपपत्तिरुपोद्घाते ॥ ६ ॥

---

१ 'कृत्स्नस्य' इत्यन्यत्र सर्वत्र पाठः ।

२ प्रकृतिपुरुषकालेश्वरात्मकं चातुरात्म्यम् ।

यथास्य प्रकृतिविकृतिवर्गस्योत्तरोत्तरापेक्षा, तथा ममात्र कारणान्तरापेक्षा नास्तीत्याह—

**मत्तः परतरं नान्यत् किंचिदस्ति धनंजय।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

यतोऽहमस्य जगतः प्रोक्तक्रमेण कर्ता संहर्ता च। अतो हेतोः मत्तः वासुदेवात् परब्रह्मणः परतरमुत्कृष्टतमं प्रेरकतमं च किंचिन्नास्ति। अत एव मयि सर्वजगत्कारणे सर्वाधिष्ठातरि सर्वमिदं तत्त्वजातं प्रोतं स्यूतं ग्रथितम्। यथा अतिवितते सूत्रे मणिगणा अन्योन्यं विलक्षणाः पृथग्भूताश्चैकत्र स्थितिमनुभवन्ति, तथा प्रकृतिविकृतितामापन्नो जडरूपेण विलक्षणोऽपि तत्त्वसंघातः मयि परमात्मनि जीवात्मनि चानुस्यूत इत्यर्थः। अत्र ह्यात्मनः सूत्रस्य च सर्वेषामेकत्रयोजनसंहरणविस्तरणमात्रसाधर्म्येणौपम्यम् ॥ ७ ॥

एतत् सर्वेषां प्रोतत्वं स्वात्मनि दर्शयति—

**रसोऽहमप्सु कौन्तेय प्रकाशः शशिसूर्ययोः।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

तदेतत् सर्वमेवासीद्व्यक्ताव्यक्तस्वरूपधृत्।

इति पुराणोपदेशेन विष्णुरेव सर्वेषां योनिः प्रकृतिरिति प्राप्ते, हे कौन्तेय, अप्सु विकृतिषु रसस्तन्मात्ररूपा प्रकृतिरहं वासुदेव एव। शशिसूर्ययोः प्रकाशविकारयोः प्रकृतिरूपः प्रकाशोऽहमेव, मय्येतत् प्रोतमित्यर्थः। तथा च। श्रुतिः—

तस्य भासा सर्वमिदं विभाति।

इति। एवमन्यत्रापि प्रोतत्वं व्याख्येयम्। सर्वेषु वेदेषु वाङ्मयेषु प्रणव ओंकारोऽहम्। प्रपञ्चितं हीदं प्रपञ्चसारे—

शब्दब्रह्मेति यत् प्रोक्तं तदुद्देशात् प्रपञ्च्यते।
शब्दब्रह्मेति शब्दावगम्यमर्थं विदुर्बुधाः ॥

---

१ 'प्रभास्मि' इति प्रचलितपाठो भास्करेणानुसृतः, गोण्डलमातृकायां च वर्तते।

२ श्वेताश्वतर, ६।१४।

स्वतोऽर्थानवबोधत्वात् प्रोक्तोऽत्रैतादृशो रवः।
स तु सर्वत्र संस्यूते जातो भूताकरे पुनः॥
आविर्भवति देहेषु प्राणिनामतिविस्तृतः।
प्रकृतौ कालनुन्नायां गुणान्तःकरणात्मनि॥

इति नादोच्चार[1]प्रपञ्चे।

हकारः पुरुषः प्रोक्तः स इति प्रकृतिः स्मृता।
अजपेयं तथा शक्तिर्मता दक्षिणवामतः॥
बिन्दुर्दक्षिणभागस्तु विसर्गो वामभागतः।
तौ च दक्षिणवामाख्यौ भागौ पुंस्त्रीविशेषितौ॥
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृता।
पुंप्रकृत्यात्मको हंसः तदात्मकमिदं जगत्॥
पुंप्रकृत्यनुसंधानात् सोऽहंभावमुपागतः।
सकारं च हकारं च लोपयित्वा प्रयोजयेत्।
संधिं तु पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत्॥

इत्या[2]दि चतुर्थे पटले। एवं शब्दस्तन्मात्ररूप आकाशे, पौरुषं पुंस्त्वं प्रजननसामर्थ्यं नृषु पुरुषप्रकृतिषु॥ ८॥

**पुण्य[3]ः पृथिव्यां गन्धोऽस्मि तेजश्चास्मि विभावसौ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु॥ ९॥**

पुण्यो निर्विकारो गन्धस्तन्मात्रं, विभावसौ वह्नौ तेजस्तन्मात्रं, जीवनं प्राणनं यद्वायोः प्रधानं रूपं सर्वेषु भूतेषु प्राणिषु।

वर्णानां नियतं कर्म तदेवाभिहितं तपः।

इति स्मृतेः, सर्वेषां वर्णाश्रमिणां स्वस्वधर्मानुष्ठाने क्रियाशक्तिरहमेवेत्यर्थः॥ ९॥

अत्र हेतुमाह—

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम्॥ १०॥**

---

१ प्रपञ्चसार, पटल १, श्लो० ६१–६३।
२ प्रपञ्चसार, पटल ४, श्लो० १७–२१।
३ 'पुण्यो गन्धः पृथिव्यां च' इति प्रचलितपाठः।

सनातनं बीजं न तु व्रीह्यादिवद्विनश्वरम् । बुद्धिमतां विदुषाम् , बुद्धिस्तत्त्वातत्त्वविचारः । तेजस्विनां राज्ञाम् , तेजः परेषामभिभवे सामर्थ्यम् ॥ १० ॥

**बलं बलवतां चाहं कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

बलं तत्तद्धारणसामर्थ्यं, कामेन विषयाभिलाषेण रागेण तत्रैवासक्त्या च विवर्जितम् । तथैव भूतेषु प्राणिषु धर्मेण धर्मशास्त्रेणाविरुद्धो देशकालापेक्षायामनिषिद्धः कामः कन्दर्पोऽस्मि । अथ च । कामशब्देन संकल्पविकल्पात्मकं मनः । बुद्धिः साक्षादेवोक्ता । नृषु पौरुषमित्यहंकारः । इत्येतदन्तःकारणत्रयमहमेवास्मीत्यर्थः । अपि चात्रोत्तमा जगत्स्थितिहेतवः पारमैश्वरैक्यात्म्यापेक्षया परमेश्वरानुस्यूता दर्शिताः । विभूत्यध्याये तु कारणत्वाकारणत्वानपेक्षया सामान्यत उत्कृष्टानि सत्त्वानि दर्श्यन्ते इति तात्पर्यम् ॥ ११ ॥

युक्त्यैतदुपसंहरति—

**ये चैव सात्त्विका भावास्तामसा राजसाश्च ये ।**
**मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

तदेवं प्रोक्तक्रमेण परमेश्वरात् संभूताः प्रकृतिविकृतिरूपाः सात्त्विकादयो भावाः परीक्षापर्वणि वक्ष्यमाणाः, ये भावाः सर्गेऽस्मिन् वर्तन्ते । 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा (श्लो० ६)' । ईदृशस्तान् सर्वान् मत्तो वासुदेवादेव जाता इति विद्धि । तु पुनरहं परमेश्वरस्तेषु भावेषु नास्मि । स्वतन्त्रत्वादहं तदधीनप्रवृत्तिर्नास्मीत्यर्थः । ते मयि, मदाश्रिता मदधीनप्रवृत्तय एव ते । अथ च भावा भवन्तीति व्युत्पत्त्या सात्विका देवादयो राजसा मनुष्यादयः तामसाः सरीसृपासुरादयः ।

---

१ 'बलवतामस्मि' इति पाठः अभिनवगुप्तटीकायामनुसृतो वर्तते । तथा क्वचिदन्यत्रापि ।

२ 'एवेह' इति भास्कररामकव्यभिनवगुप्तानां, तथा गोण्डलकलकत्तामातृकयोः पाठः ।

इति सर्वो जीववर्गो मत्त एव संभूतः। तु पुनर्नाहं तेष्वाश्रितोऽस्मि। ते मयि, ते तु प्रलये मय्येऽवलीयन्ते। तथा योगाभ्यासात् सत्त्वशुद्धिक्रमेण मत्सायुज्यं च यान्तीत्यर्थः। अत्रायं वाक्यार्थः। यथा घटशरावादयः परमकारणान्मृदः संभूताः, प्रध्वस्ता मृदेव भवन्ति। वर्तमानानां च तेषां भिन्नाकाराणां भिन्नवर्णानां पुण्यापुण्यलिप्तानां संबन्धिन आकारादेः संबन्धः परमकारणभूतायां मृत्तिकायां नास्ति। तथा सर्वेषां परमकारणस्यापीश्वरस्य जीववर्गसंबन्धिकर्मफलादिसंबन्धो नास्तीति ॥ १२ ॥

तदेवं सर्वेषामेकस्मिन् परमकारणे त्वयि परमेश्वरे प्रसिद्धे सति, लोका यत् तत्र तत्र कारणान्तरमेव जानन्ति, तत्र किंनिमित्तो व्यामोह इत्याशङ्कां गर्भीकृत्योपदिशति—

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

सर्वमिदं जगत् देवादिमशकान्तो जीवलोकः। एभिरुद्दिष्टैर्लक्षयिष्यमाणैश्च त्रिभिः सात्त्विकादिभिर्गुणमयैर्भावैरन्योन्याभिभवजननवृत्तिभिः प्रीत्यप्रीतिविषादात्मकैः मोहितं, विपरीतज्ञानवशीकृतं सत्, मामुक्तप्रकारलक्षणमीश्वरमेभ्यो गुणमयेभ्यो भावेभ्यः परमतीतम्, अत एवाव्ययं निर्विकारं च, नाभिजानाति, सर्वकर्तृत्वेन न वेत्ति, इत्यर्थः ॥ १३ ॥

अयं व्यामोहः कथमपयातीत्याह—

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

दैवी, देवात् परमकारणात् ईश्वरादुक्तक्रमेण प्रादुर्भूता। गुणमयी परस्पराभिभवजननवृत्त्या सत्त्वरजसोरभिभवादुद्रिक्तेनावरकेण प्रकाश-

---

१ द्रष्टव्या सांख्यकारिका १२।

२ मातृकायां 'मायामति°' इति प्रान्ते लिखितम्। स एवाभिनवगुप्तपाठस्तथा कलकत्तामातृकायामपि। आनन्दवर्धनेनापि स एव व्याख्यातः।

तिरोधायिना तमसा प्रचुरा एषाहंकारप्रकृतिर्लोकानां मम माया मत्तिरोधानकारणं, मेघच्छायेव सूर्यतिरोधानकारणं सूर्यस्य तिरोधानहेतुः। दुरत्यया दुःखेनात्येतुं लङ्घयितुं शक्यते। यथा लोका मेघच्छायाछादितदृशः सर्वप्रकाशकं सूर्यमुदितमपि न जानन्ति, तथैवाहंकारेण तिरोहितज्ञानाः, अत एव स्वस्मिन् कर्तृत्वमभिमन्यमानाः, मां परमेश्वरं सकलकारणं न जानन्तीत्यर्थः। तथा चामुमर्थं, नाहं प्रकाशः सर्वस्य (श्लो० २५) इत्यत्र प्रकाशयति। मम मायेति कर्मणि षष्ठी। मायाछायाशब्दौ भावकर्मणोरुणादिषु व्युत्पादितौ[1]। ये पुनराभ्यन्तरसंयमोपबृंहितज्ञानकर्मसमुच्चयानुष्ठानेन रजस्तमसोरभिभवादुद्रिक्तसत्त्वाः, सर्वं हेयं प्रकृतिविकृतिजातं त्यक्त्वा, मां परमात्मानमेव प्रपद्यन्ते। सदा सर्वत्र मदाश्रिता एव भवन्ति। ते मायामुक्तलक्षणामतितरन्ति, अतिक्रामन्ति। प्रकृतेः पृथगवस्थिताः स्वात्मालोकं प्राप्नुवन्तीत्यर्थः। तथा च, अहंकारविमूढात्मा कर्ताहम् (३।२७), इत्यस्य, तत्त्ववित् तु महाबाहो गुणकर्मविभागयोः (३।२८), इत्यस्य चोद्दिष्टस्य लक्षणं निर्व्यूढम्। तथा शिवशासने ईश्वरप्रत्यभिज्ञायां मायालक्षणविस्तरः॥

तस्यैश्वर्यस्वभावस्य पशुभावे प्रकाशिका।
विद्याशक्तितिरोधनकरी मायाभिधा पुनः॥[2]

अस्यार्थः। पशुभावे ग्राह्यग्राहकविपर्यासोभयात्मनि पाशयोगलक्षणे स्थितेऽपि तस्य प्रमातृपरमार्थरूपस्यैश्वर्यलक्षणस्य स्वभावस्य या प्रकाशिका भगवतः शक्तिः साविद्या। तस्यैश्वर्यस्वभावस्य तिरोधानकरी पुनर्मायाभिधाना शक्तिः। तिरोधानं स्वरूपाप्रकाशनम्। अचिद्रूपे शून्यादौ प्रमातृताभिमानं प्ररूढं दधती, चिन्मयानपि भावान् भेदेनावभासयन्ती, सर्वथैव स्वरूपं तिरोधत्ते। विमोहिनी हि सा॥

भेदे त्वेकरसे भातेऽहंतयानात्मनीक्षिते।
शून्ये बुद्धौ शरीरे वा मायाशक्तिर्विजृम्भते॥[3]

---

१ द्रष्टव्यमुणादिसूत्रम्, ४।१०९।

२ आगमाधिकार, आह्निक १, का० ७।

३ तत्रैव, का० ८। तत्स्थविमर्शिनीटीका च संक्षिप्यात्र लिखिता।

अस्यार्थः । सुषुप्ते प्रलये नेत्यभावसमाधौ च यत् शून्यमाकाशकल्पम्, तदनुसरणत्वेन वेद्यं सदपि अहमित्यात्मत्वेनाभिमन्यते । अथवा उच्छ्वसनविधौ प्राणः शून्यं वायुकल्पमहं श्वसिमि निःश्वसिमीत्यहंतयाभासते । तथा बुद्धिः स्वल्पसलिलाशयसदृशी वेद्यप्रतिबिम्बवती, अहं वेद्मि सुखी दुःखी मूढोऽहमिति चिन्ताद्यवस्थायामहमित्यात्मत्वेन मन्यते । कृशः स्थूलोऽहं गौरोऽहमिति पृथिवीप्रायं शरीरमहमित्यात्मतया भाति । सर्वमिदं शून्यादिकं वस्तुतः चिन्मात्रसारमपि माययैव तावत् संकोचादचिद्रूपतया संपादितमिति मायाशक्तिर्विजृम्भते । एवंविधातिदुर्घटवस्तुसंपादनमोहव्यापारसंपत्त्यप्रतिघातरूपेण विलसति । वाशब्दात् वेद्यरूपाणामेव दारसुतधनगृहादीनां गाढामहंतां सूचयति ॥ १४ ॥

मायास्वभावं प्रपञ्चयति—

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमास्थिताः ॥ १५ ॥

मायया प्रोक्तरूपयापहृतात्मबोधा नराधमाः, आसुरं भावं सत्त्वरजसोरभिभवात् केवलं तामसत्वमाश्रिताः, अत एव दुष्कृतिनः, प्रवृत्तिनिवृत्त्यादेरज्ञानादूषितं कर्म कुर्वाणाः, मूढाः अहंकारविमोहिता मां न प्रपद्यन्ते । मां परमेश्वरतया न जानन्ति । अत एव न मच्छरणीभवन्ति । सर्वमेतत् परीक्षापर्वणि देवासुरसर्गं विस्तारयति ॥ १५ ॥

ये तु सत्त्वोद्रेकात् शरणीभवन्ति तानाह—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन[1] ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

सुकृतिनो, दमदानयज्ञस्वाध्यायतपःप्रभृतिशोभनं सात्त्विकं कर्म रजस्तमसोः क्षपणार्थं प्राक् कृतवन्तोऽद्य च कुर्वाणाः । चतुर्विधाः, चतस्रः आर्तिजिज्ञासासदुपदेशानुशीलनतत्त्वावबोधरूपाः विधाः ब्रह्मप्राप्तिसाधनप्रकाराः येषामीदृशाः, जनाः मां परमेश्वरं भजन्ते, उपासनाविषयीकुर्वन्ति । तानेव गणयति । आर्तः, दुःखत्रयाभिघातवेदनावान् ।

---

१ 'सुकृतिनः सदा' इति रामकण्ठाभिनवगुप्तयोः पाठः ।

जिज्ञासुः, वेदनानन्तरं तदुपशमहेतुज्ञानाय गुरुं समुपेतः । अर्थार्थी, गुरुणोपदिष्टस्यार्थस्य दुःखोपशमहेतोर्वस्तुनः अर्थी प्रेप्सुः, सदुपदेशमनुशीलयन्नित्यर्थः । अर्थार्थितायाः सदुपदेशानुशीलनं पर्यायः । ज्ञानी, एवं क्रमेण प्राप्तपरमात्मबोधश्चेति । चकारः समुच्चये । दुःखत्रयाभिघातवेदनावत्त्वात् प्रभृति समुदितोपायोपेयत्वे, श्रयन्ति इत्यर्थः । तदेवमार्त्यादीनां चतुर्णामपि प्रकाराणां ब्रह्मप्राप्तौ सामस्त्येनैवोपायत्वं, न तु व्यस्तत्वेन पृथगार्तादिषु पुरुषत्वेन । तथा चोद्देशपर्वणि— 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया (४।३४)' इत्यत्राप्ययमेवाभिप्रायः । तथा हि । लोके य एवार्तः, स एव रोगोपशमोपायं वैद्यं पृच्छति । वैद्योपदिष्टं रोगोपशमनमनुशीलयन्नारोग्यं भजते ॥ १६ ॥

तदेवमार्त्यादीनां चतसृणामपि विधानां समुदितानामेकपुरुषाश्रयाणां सुकृतित्वे तुल्ये सत्यपि, सर्वेषामुपायानां परां काष्ठां ब्रह्मप्राप्तावव्यवहितमुपायं ज्ञानप्राप्तिं मत्वा ज्ञानिनमेव सर्वोत्कर्षेण स्तौति—

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

ज्ञानी परमात्मबोधवान् । ज्ञाननिष्ठां प्राप्तोऽत एवैकस्मिन् परमेश्वरे एव भक्तिः सेव्यताज्ञानं, न त्वार्तादिवत् जिज्ञासादौ, यस्य सः । नित्यमविच्छेदेन युक्तः, परमेश्वर एव समाहितचित्तः । तेषामार्तादीनां मध्याद्विशिष्यते । हि यस्मादहं ज्ञानिनोऽत्यर्थं प्रियः । सर्वं संसारप्रपञ्चं पुत्रदारधनादिकं इन्द्रियवर्गादिकं च परिहृत्य मद्भक्तावेव यत्नवत्त्वात् । अत एवंभूतो ज्ञानी मम प्रियः ॥ १७ ॥

तव सर्वेश्वरस्य सर्वेषु समस्य कथं ज्ञानवानेव प्रियो, नार्तादय इत्याह—

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः[1] ।
आस्थितः स हि युक्तात्मा ममैवानुत्तमा[2] गतिम् ॥१८॥

---

१ 'मतम्' इति प्रचलितपाठः ।
२ 'मामेवानुत्तमां' इति प्रचलितपाठः ।

एते सर्वे एवार्तादयः उदाराः, उ-ऊ-उ३ च पदं परमात्मा परमेश्वरः, अर्यते प्राप्यते एभिरुपायैरिति व्युत्पत्त्या सर्वे एव मम प्रियाः। तथापि ज्ञानिनः प्रियत्वे विशेष इत्याह । तु पुनः, एभ्यो विशेषात् ज्ञानी ममात्मैव मतः, मत्सायुज्यं प्राप्तः । इह हि—पुत्रः पुत्राय [न] प्रियो भवति, आत्मने एव पुत्रः प्रिय इति, श्रुतिनीतेरार्तादीनां ज्ञानप्राप्त्युपायोपाधिकं प्रियत्वम् । ज्ञानिनि तु ममात्मभूते साक्षादेव प्रियत्वम् । ज्ञानिनः स्वाभिन्नात्मत्वे युक्तिमाह—हि यस्मात्, ज्ञान-युक्तात्मा, ज्ञानेन युक्तः संयमेन परमात्मनि संयोजित आत्मा येन सः । ममैवानुत्तमां गतिं सायुज्यमभेदमास्थितः ॥ १८ ॥

अथ परां ज्ञानकाष्ठामनवाप्योपायान्तरयत्ने एव मृतश्चेत् तस्य का अवस्थेत्याशङ्कयाह—

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

'प्राप्य पुण्यकृतांल्लोकान्' इत्यादि(६।४१)प्रागुक्तयोगसिद्धिनयमादृत्य, अतीतजन्मसु वासनानवच्छेदात्, बहूनां जन्मनामन्ते, उत्तरोत्तरं सत्त्वशुद्धिसंपत्त्या वासुदेवः सर्वमिति ज्ञानवान्। वसन्त्यस्मिन्नधिष्ठा-तरि सर्वाणि भूतानि, वसति चान्तर्यामित्वेन सर्वेषु भूतेष्विति वासु-देवः। दिवुँ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु इत्यतो व्युत्पत्त्या क्रीडनादिसर्वार्थकः, वासुश्चासौदेवश्च वासुदेवः, सर्वकार्यकारणादिप्रपञ्चतया स्थितः, इति परमां ज्ञानकाष्ठां प्राप्तः, मां प्रपद्यते । मयि सायुज्यमाप्नोति । यतस्त्वेवं मां प्रपन्नः सः, महान् ब्रह्मीभावेन महत्त्वं प्राप्त आत्मा यस्येदृशः सुदुर्लभः । तदुक्तं योगानुशासने—तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानां जातिदेश-कालव्यवहितानामर्थानन्तर्यं स्मृतिसंस्कारयोरेकत्वादिति । अस्यार्थः । यथानुभवास्तथा संस्काराः। ते च कर्मवासनानुरूपाः, यथा च वासना

१ ± बृहदारण्यक॰, २।४।५।
२ पाणिनीयधातुपाठ, ४।१।
३ द्रष्टव्यं योगसूत्रं ४।९, व्यासभाष्यं च।

तथा स्मृतिरिति। जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः, स्मृतेः पुनः संस्काराः, इति तेषामनादित्वमाशिषो नित्यत्वादिति। इह हि निजप्रकृत्यनुरूपं दुःखस्य प्राप्त्या सुखस्य चाप्राप्त्या तदुभयस्वरूपानवधारणेन चार्तो जिज्ञासादिपरो भवति। ततोवधारिततत्स्वरूपस्योद्रिक्तसत्त्वस्यायं प्रकारो दर्शितः ॥ १९ ॥

अन्यस्य दर्शयति—

तैस्तैः कामैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

तैस्तैः कामैः, वक्ष्यमाणासुरभावोत्पन्नैः शान्तिकपौष्टिकाभिचाराभिलाषैः काम्यविषयैः। हृतज्ञानाः, अपहृतसत्त्वप्रकाशाः। अस्मात् मदाराध्यात् इन्द्रादेरपरः कर्मफलदः कश्चिदीश्वरो नास्तीति मिथ्या ज्ञानवन्तः। स्वया स्वात्मीयया प्रकृत्याहंकारिकया तामस्या नियता नियन्त्रितास्तमसः कार्येणानुग्रहेण वशीकृताः। तं तं नियमं शान्तिकादौ कर्मण्यासक्तिं आस्थाय। अन्याः परमेश्वरव्यतिरिक्ताः देवपितृभूतात्मिका देवतास्तत्तत्कर्माधिष्ठात्रीः प्रपद्यन्ते ॥ २० ॥

अत्रासक्तिप्रकारमाह—

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

यः यः पुरुषः, यां यां तनुं, इन्द्रादिमूर्तिम्, जन्मान्तरवासनाविर्भूतया श्रद्धया तत्तत्फलप्राप्तयेऽर्चितुमिच्छति। तस्य तस्य पुंसः, तामेव तादृशीमेव श्रद्धामहं परमेश्वरः सर्वेषां तत्तत्कर्मफलप्रापकोऽचलां विदधामि। तत्र तत्रेन्द्रादिष्वेव स्थिरां करोमि, न तु ब्रह्मणीत्यर्थः ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्या राधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥

स तया श्रद्धया मया स्थिरीकृतया युक्तः, तत आराधितादिन्द्रादेः

१ 'कामैस्तैस्तै॰' इति प्रचलितपाठः।

कामांल्लभते चं। इन्द्रादीनां कथमेतत्फलदाने शक्तिरित्याह। मयैव सर्वज्ञेन तत्तन्मूर्तिव्यापकेन विहितांस्तांस्तान् कामान् लभते। विचारितं चैतत् सविस्तरम्—

चिरध्वस्तं फलायानं न कर्मातिशयं विना।

इत्यत्र न्यायकुसुमाञ्जलावुदयनाचार्यैः ॥ २२ ॥

परमेश्वरार्चनादन्यदेवार्चनयोर्विशेषमाह—

**अन्तवत् तु फलं तेषां तद्भवत्यल्पमेधसां।**

तु पुनः, तेषामिन्द्रादिभक्तानाम्, अत एवाल्पमेधसाम्, अल्पा शक्रादेरन्य ईश्वरो नास्तीति परिमिता, ब्रह्मज्ञानमप्राप्ता मेधा बुद्धिर्येषाम्। फलं स्वर्गादिकं तत्तद्देवाराधनफलमन्तवद्विनश्वरं भवति। न तु परमेश्वराराधनफलवदनन्तमित्यर्थः। शक्रादिभक्तानां भक्तितारतम्येन तत्सालोक्यादिप्राप्तानामपि नियतमधःपतनमिति तथैव लक्षयिष्यति—रात्र्यागमे प्रलीयन्ते प्रभवन्त्यहरागमे (८।१८) इति ॥ एतदेवाह—

**देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः।**
**भूतानि यान्ति भूतेज्या मद्भक्ता यान्ति मामपि ॥ २३ ॥**

देवयजः, इन्द्रादीनुद्दिश्य स्वाहाकारेण यजन्तः, देवान् यान्ति देवलोकं यान्ति। पितृव्रताः, स्वधाकारेण पितॄन् यजन्तः, पितृलोकं यान्ति। भूतेज्याः, भूतानुद्दिश्य नमस्कारेण यजन्तः, भूतानि यान्ति। तां तां भोगभूमिं प्राप्नुवन्ति। देवादिलोकं प्राप्य फलक्षये पुनरावर्तन्ते इत्यर्थः। ये तु मद्भक्तास्ते मां यान्ति, मां प्राप्य न पुनरावर्तन्ते, इत्यर्थः। लक्षयति चैतत्—आ ब्रह्मभुवनात् (८।१६) इति ॥ २३ ॥

---

१ चकारादत्र टीकायां द्वितीयचरणव्याख्यात्मका त्रुटिरनुमीयते।

२ प्रथमस्तबके नवमः श्लोकः।

३ अयमर्धत्रयात्मकः ( षट्चरणात्मकः ) श्लोकः। तत्र चतुर्थपञ्चमचरणौ न प्रचलितपाठे विद्येते, न वाभिनवगुप्तेन रामकविना च पठितौ। गोण्डलमातृकायां चतुर्थचरणः—'सिद्धान् यान्ति सिद्धव्रताः' इति पठ्यते।

परमयोगिभिरनेकजन्मयत्नप्रत्यक्षीकरणीयमपीदानीं भवन्तमीश्वरं लोकानां भाग्यवशादत्र प्रत्यक्षे वर्तमानं, कथं न सर्वे भजन्ते इत्याह—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

नास्ति व्ययो विकारो यस्येत्यव्ययम् । न विद्यते उत्तमः कश्चित् कारणं यस्मात् तम् । जगत्कारणानां सर्वेषां परमकारणम् । ईदृशं मम परं सर्वोत्तीर्णं भावं स्वभावमजानन्तः, अत एवाबुद्धयो रजस्तमसोरभिभवाज्ज्ञानहीनाः मां प्रत्यक्षावस्थितम्, अव्यक्तं व्यक्तिमापन्नं मन्यन्ते। कंचन प्राकृतं जीवमिव इदंशरीरग्रहणात् पूर्वमव्यक्तमदृष्टपूर्वमिदानीं मन्यन्ते । प्राक्कर्मवशादत्र जातं मां सामान्यजीवं मन्यन्ते ॥ २४ ॥

इहास्मिन्नेव देहे कृतैरत्याश्चर्यैः कर्मभिः गोवर्द्धनोद्धरणब्रह्मवञ्चनशंकरजयादिभिस्तव पारमैश्वर्यं सर्वत्र प्रसिद्धमेव । तत् कथं त्वां परमेश्वरत्वे न जानन्तीत्याह—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

योगः, भूतप्रकृत्यहंकाराद्यात्मको यः संघातः, स चासौ माया, दैवी ह्येषा गुणमयी (७।१४) इत्यत्रोद्दिष्टा मत्तिरोधानकारणं, तया समावृतः, आच्छादितो मेघच्छाययेव सूर्यः, अहं परमेश्वररूपः सर्वस्य लोकस्य प्रकाशो नास्मि, यतोऽयं लोकः मूढो, मायया मोहितः, अन्यथाज्ञानविषयीकृतः, मामजमव्ययमीश्वरं नाभिजानाति । सविकारकं कंचनजीवं जातं मां मन्यन्ते ॥ २५ ॥

स्वस्येश्वरात्मतां दर्शयति—

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
[१]भविष्यन्ति च भूतानि न तु[२] मां वेद कश्चन ॥ २६ ॥

स्पष्टम् ॥ २६ ॥

---

१ 'भविष्याणि' इति प्रचलितपाठः ।
२ 'मां तु वेद न' इति प्रचलितपाठः । स एव प्रायोऽन्यत्रापि ।

कथं न वेदेत्याह—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं यान्ति सर्गे परंतप ॥ २७ ॥

रागद्वेषोद्भवेन द्वन्द्वमोहेन, इदमनुकूलं मया ग्राह्यमिदं प्रतिकूलं मया
३ त्याज्यमिति द्वन्द्वोद्भवेन मोहेनाहंकारेणैव तमसा, सर्वाणि भूतानि
प्राणिनः अस्मिन् सर्गे संसारे मोहं यान्ति । आसुरं सर्गं प्राप्ता मां
नाभिजानन्तीत्यर्थः ॥ २७ ॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

येषां पुण्यकर्मणां पुण्यं, रजस्तमोनाशकं कर्म सत्त्वशुद्धये कृतवतां,
जनानां दैवसर्गभाजां पापं तमोरूपमन्तं क्षयं गतम् । ते द्वन्द्वमोहाद-
३ हंकारान्निर्मुक्ताः, अभिभूतरजस्तमसः । दृढव्रताः, सततं मद्भजनो-
पायेषु यत्नवन्तः स्थिरबुद्धयो, मां भजन्ते ॥ २८ ॥

तदेवमस्मिन्नध्याये परमेश्वरस्वरूपं चतुरात्मकं यथावल्लक्षयितुमा-
रब्धम् । पञ्चमे षष्ठेऽध्याये षडङ्गयोगाभ्यासेन प्रधानजयपर्यन्तेन
३ कृतदृढभूमिजयानां ब्रह्मैक्यप्राप्तिपर्याया मुक्तिर्दर्शिता । सा च देहे
सति न संभवति । मुक्तिर्हि बन्धाभावः । बन्धश्च भूतेन्द्रियान्तःकर-
णसंघातरूपेण देहेन संबन्धः । तदेवमनेकजन्मसंसिद्धस्य चरमदेह-
६ पातोत्तरकालमेव ब्रह्मप्राप्तिरिति सर्वश्रुतिस्मृत्यागमप्रसिद्धिदर्शनाद्ब्रह्म-
प्राप्तौ नेदीयसमुपायं देहोत्क्रान्तिं लक्षयितुमुपक्रमते—

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

---

१ 'सर्गे यान्ति' इत्येवान्यत्र पाठः ।

२ 'त्वन्तगतं' इति प्रचलितपाठः ।

३ 'नदेयासमुपाय' इत्येतान्येवाक्षराणि मातृकायाम् ।

४ 'भजन्ति' इति कलकत्तापाठः ।

साधिभूताधिदैवं मां साधियज्ञं च ते[1] विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

युक्तचेतसः, प्राक् लक्षितेन योगाभ्यासेन समाहितान्तःकरणाः ।
९ एतद्व्याख्यानमन्यदग्रिमाध्याये प्रश्नोत्तरेषु विव्रियते इति शुभम् ॥ २९ ॥ ३० ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
सप्तमोऽध्यायः ॥ ७ ॥

---

१ 'थे' इत्येव सर्वत्र पाठः ।

# ॥ अष्टमोऽध्यायः ॥

तदेवं परमेश्वरस्य प्रागुद्दिष्टे चातुरात्म्ये लक्षयितव्ये प्रथमं सर्वाधिष्ठातृतया प्राप्तं परमेश्वरस्वरूपलक्षणं निरूप्य प्राप्तावसरमत्र काल-
३ स्वरूपं लक्षणीयम् । तत्रातीताध्यायान्ते योगिनां देहोत्क्रान्त्युपक्रमे साधिभूतादयो ये पदार्था उपन्यस्तास्तांस्तत्त्वतो ज्ञातुम्—

अर्जुन उवाच ।

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकालेऽपि कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

अत्र प्रश्नार्थः सुगमः ॥ १ ॥ २ ॥

एषां प्रश्नानां क्रमेणोत्तरं लक्षणं—

श्रीभगवानुवाच ।

अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

न क्षरति स्वभावात् प्रच्यवति यत् तन्निर्विकारम् । अश्नुते सर्वं तत्त्व-
३ जातमित्यक्षरं सर्वव्यापकं वा । परमं ब्रह्म परमात्मसंज्ञम् । स्वः, स्वकीयः परब्रह्मणो भावः अंशः जीवादिप्रकृतिवर्गः, अध्यात्ममुच्यते। आत्माधिकृतो यत्र तथेति क्रियाविशेषणत्वादात्माधीन-
६ प्रकृतिरित्यर्थः । भूतानां भावः सत्ता, तस्योद्भवः, सदान्तःस्थितानामेव बहिरवभासनं, तं करोतीतीदृशः विसर्गः, विविधसृष्टिरूपः कालापेक्षः पारमेश्वरो व्यापारः, कर्मसंज्ञितः ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

क्षरति स्वभावात् प्रच्यवति, विकारमाप्नोतीति क्षरः, देहेन्द्रिय-

विषयलक्षणः, भावो यःकश्चन पदार्थः । भूतान्यधिकृत्यानि यत्र तथेति व्युत्पत्त्याधिभूतं भूताधनिलयोत्पत्तिरित्यर्थः । पुरि शेते इति पुरुषः, जातावेकवचनम् । सर्वे क्षेत्रज्ञाः । अधिदैवतं, दैवतं परमेश्वरोऽधिकृतो यत्र तथेति व्युत्पत्त्या तत्तत्कर्मफलभोगार्थं तासु तासु योनिषु परमेश्वराधीनजन्मा इत्यर्थः । अत्रास्मिन् मनुष्यदेहे, अहमेवाधियज्ञः, यज्ञेषु द्रव्ययज्ञादिषु अहं परमेश्वर एवाधिकृतस्त-त्तद्यज्ञफलदः यज्ञभोक्ता चेत्यर्थः ॥ ४ ॥

प्रयाणकालेऽपि च मां स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

प्रयाणकाले, वक्ष्यमाणोत्क्रान्तिसमये, मामेव परं ब्रह्मस्वरूपं नीरूपं, चतुर्भुजादिकं साकारं वा, स्मरन्, धारणाभिः संयमविषयी-कुर्वन्, यो जीवात्मा प्रयाति, पाट्कौशिकं देहं त्यक्त्वोत्क्रामति, सोऽयं मद्भावं याति । मम परब्रह्मणो भावमैक्यं याति, नास्त्यत्र संशयः । तथा श्रीलक्ष्मीवासुदेवकल्पे भगवान् —

पुरा कुलक्रमं ज्ञात्वा शरीरे नाडिगोचरम् ।
द्वासप्ततिसहस्त्रीणा नाडीनां तत्र संस्थिताः ॥
तस्या अथ भवेन्मध्याच्छतमेकोत्तरं परम् ।
ऊर्ध्वाधस्तिर्यगावाहं शरीरान्तर्गतं ततः ॥
इडा चैव सुषुम्णा च पिङ्गला च तृतीयका ।
गान्धारी हस्तिजिह्वा च पूषा चैव यथा तथा ॥
अलम्बुसा कुहूश्चैव शङ्खिनी दशमी तथा ।
दशैताः प्राणवाहिन्यो नाडयः परिकीर्तिताः ॥
त्रितयं तत्समूहाश्च परं ज्ञेयमिडादि यत् ।
सुषुम्णाख्या इडाख्या च दक्षिणोत्तरतः स्थिते ॥
तयोः संघट्टयोगेन स्थिता चोर्ध्वप्रवाहिणी ।
सुसूक्ष्मा परमा गुह्या परव्योमान्तगामिनी ॥

१ 'अन्तकाले च मामेव' इति प्रचलितपाठः, 'अन्तकालेऽपि मामेव' इति रामकव्यभिनवगुप्तयोः पाठः ।

पिङ्गला नाम सा ख्याता ऊर्ध्वाधो दण्डवत् स्थिता ।
तन्निबद्धाः स्थिता नाड्यः शिराः सप्तशतानि च ॥

कुलस्य शरीरस्य क्रमः, प्राणचारेण तेषु तेषु स्थानेष्वनुभवविच्छित्तिलाभः, तम् । पुरा उत्क्रान्तेः, पूर्वमुत्क्रमणात्, ज्ञात्वा चिरमनुभूय विरामे पिण्डपरिणतिमपचयलक्षणां पञ्चमीमवस्थामाप्तां मत्वा ज्ञात्वा चोत्क्रमेत्, इति महावाक्यार्थः । शरीरे नाडिविषयाः प्राणचाराः योगिना ज्ञातव्याः । तदन्तर्निरामयं परमात्मस्वरूपं व्योमचक्रेषु साक्षात्कृत्य लभ्यम् । तदेवं शरीरे द्वासप्ततिसहस्राणि नाड्यः स्थिताः । तासां मध्यादेकोत्तरं शतं परमुत्कृष्टं नाड्यः । तच्चैकोत्तरं शतं न त्वग्गतं, किं तु शरीरस्यान्तः शाखोपशाखान्तर्गतं महापद्मान्तर्वर्ति, जीवात्मनस्तिर्यगूर्ध्वाधोवहनेन बन्धहेतुः, दन्तिन इवालानम् । तन्मध्यादिडाद्या दश नाड्यः प्राणादिपञ्चकस्य नागादेरुपप्राणपञ्चकस्य च स्वस्थाननियन्त्यै वाहिकाः प्रधानभूताः । तत्रापीडासुषुम्णापिङ्गलाख्यास्तिस्रः प्रधानम् । तिसॄणामपि मध्याद्दक्षिणोत्तरस्थयोः सुषुम्णेड्योर्मध्यवर्तिनी, ऊर्ध्वं दण्डगत्या ऊर्ध्वचक्रैकविश्रमोन्मुखी, सर्वसारं पिङ्गला नाम, तयोः सख्येव मध्यान्तरालवर्तिनी, द्विसंघट्टजनितनाडीसंस्थानेन वा । सुसूक्ष्मत्वाद्दृष्ट्या दुर्लक्ष्यरूपा । तदेवं पार्श्वद्वयगतनाडिद्वयोपनिबद्धाः तयोश्चान्या गान्धारीप्रभृतयो यथायथमुपनिबद्धाः । तासां चैकशतम् । तस्यापि सूक्ष्मासूक्ष्मतमाश्च निखिलाः संसृष्टिसंगता इति नाडिप्रसरक्रमः । यदुपनिषत्—

शतं चैका पुरुषस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति ॥[1]

एताभिश्चित्रमेवेदं शरीरं हंसपञ्जरम् ।
त्रिःस्थूणं सप्तधाकारं षट्चक्रं षोडशात्मकम् ॥

स्तुतं च—

मानसाब्जबिसदण्डमण्डलीकन्दकोटिकलिकां परामृशन् ।
स्वस्वभाववदिहापि पञ्जरे हंस रजयसि मां सृजन् प्रजाः ॥

---

१ कठोपनिषद् २ । ३ । १६ ।

४५ तथा—

संततत्रिगुणपाशवेष्टितः प्राणहंस इह चित्तचेष्टितैः ।
उत्पतत्यनुपतत्यहर्निशं क्रीडयैव परमेश्वरस्य ते ॥

४८ इति ।

वातपित्तकफैश्चैव त्रिःस्थूणं धार्यते पुरम् ।
मेदो मांसमसृङ्मज्जा शुक्रमेव च पञ्चमम् ॥
५१ अन्नपानसमेतं यत् सप्तैते धारणात्मकाः ।
मूर्ध्नि तालुतले कण्ठे हृदये नाभिपुष्करे ॥
तथा कण्ठे क्रमेणैव चक्रषट्कं व्यवस्थितम् ।
५४ प्रथमं मूर्ध्नि चक्रं च नीरूपं भास्वराकृति ॥
तत्रस्थ ईक्षते जीवः परं पदमनामयम् ।
तदधस्तात् तालुचक्रं भ्रुवोरन्तर्गतं च यत् ॥
५७ तत्र जीवोऽमृतः सम्यक् पश्येद्विश्वं चराचरम् ।
कण्ठचक्रे वसत्यात्मा जिह्वामूले निराकृतिः ।
प्राप्नोति परमां तृप्तिं षड्रसप्रभवामपि ॥
६० हृच्चक्रकुहरे साक्षात् पुरुषो विन्दुरूपकः ।
वेत्ति सर्वंक्रमात् तत्र सारं यद्यद्व्यवस्थितम् ॥
नाभिचक्रे स्थितश्चैव त्रिकोणे त्रिगुणात्मके ।
६३ तेज आत्मा स भगवान् पचत्यन्नं चतुर्विधम् ॥
कन्दचक्रं समवहत् सूक्ष्मनाडित्रयात्मकम् ।
नाडिचक्रं प्रेरयति प्रोत्सर्गकरणं प्रति ॥
६६ मलशल्करसावाहास्तिस्रस्ताः परिकीर्तिताः ।
संचरंश्चक्रनाथोऽत्र भुङ्क्ते भोगानशेषतः ॥

अस्यार्थः। सृष्टिक्रमेण मूर्धा चक्रस्य प्राथम्यम्। तच्च नीरूपं निरवयवं
६९ कण्ठपराधस्थसंस्थानस्य वैशद्यादरूपं भास्वराकृति सर्वतः प्रसृतरश्मि-
निवहम् । तत्र विद्यासंपुटधाम्नि तुर्या भूमिका भगवतो वासुदेवस्य
प्रतिष्ठा । तत्स्थाने यदा क्षेत्रज्ञ आस्ते, तदा परब्रह्मभूतो निरामयं
७२ निर्मलं समं पदमीक्षते । यदुक्तम्—मूर्ध्नि सिद्धदर्शनम् इति ।

---

१ ± योगसूत्र, ३।३२।

मूर्धाचक्रादधोभूमिकास्थितं भ्रुवोरन्तरालवर्ति चतुरं तालुचक्रम् । तच्चक्रवर्ती जीवात्मा । बहिर्मुखाङ्कुरीभावादच्युतस्वरूपविश्रान्तः ईश्वरधर्मो मध्यमाभिमतां दशामाविष्ट इव विश्वं जडाजडस्वभावं पश्यति । यदुक्तम्—

बिन्दुमध्यगतो योगी सर्वं जानाति सर्वदा ।

इति । अत्र च मध्यवाहेनोद्गतस्य प्राणस्योदानीभावः । अत्रैवोक्तं—सूर्यसंयमनाद्भुवनालोकनम्, इति । तदधस्ताज्जिह्वामूले षडस्रके कण्ठचक्रे निराकारो निर्धूतकरणः षड्रसरचितामभुञ्जानोऽपि तृप्तिं प्राप्नोति । यदुक्तम्—कण्ठकूपे क्षुत्पिपासानिवृत्तिः, इति । ततोऽप्यधरतरभूमिका द्वादशारं हृच्चक्रम् । तत्र कमलकर्णिकायामुभयतः साक्षात् स्वानुभवसिद्धः, क्षेत्रज्ञतया निरूपितः, पुरुषो बिन्दुना सूक्ष्मेण वपुषाभिलक्ष्यमाणोऽङ्गुष्ठपरिमाणः शरीरपरिमाणं यद्यद्यथावस्थितं तत्तत्तथैव तथेति । निरावरणीयं च वर्तमानमखिलं जानाति । यदुक्तम्—हृदये चित्तसंवित् इति । तथा वर्तमाने हृदि स्थित इति । विशेषश्च ।

हृत्पद्मपूर्वपत्रस्थः प्रभुत्वमभिमन्यते ।
कार्पाणवे दले तीक्ष्णः क्रूरो वैवस्वते दले ॥
नैरृते निकृतिप्रज्ञ आनन्दयति वारुणे ।
क्षोभशीलश्च वायव्ये कौबेरे धनलम्पटः ॥
ऐशाने ज्ञानवान् मध्ये निर्मले लीनवासनः ।
अहंकाराश्रितो गर्वं जनयित्वा प्रदर्शयेत् ॥
मन उत्पादयेद्विश्वं संकल्पानल्पकल्पनैः ।
निश्चिन्वन्नपि निश्चेयं बुद्धितत्त्वं परामृशेत् ॥
इच्छासृष्टिः पदार्थानां भासनं विषयस्थितिः ।
इच्छा विनाशः संहारः शक्तयस्ता विभोरिव ॥

पञ्चारशक्तिर्नाभिचक्रे च गुणत्रयात्मकतया नानावर्णतैजसत्वात् त्रिकोणसंस्थानं स्वतःप्रवुद्धजठरानलरूपोऽन्नं फलमूलबीजामिषमयं

---

१ ± योगसूत्र, ३।२६। २ योगसूत्र, ३।३०।
३ योगसूत्र, ३।३४।

सारासारविभागेनोर्ध्वमधोऽपि परिणमयति। अत एवातिक्रान्तं वेत्ति
च । तदुक्तम्——अतीतं वेत्ति नाभिस्थ इति । तथा, नाभिचक्रे
१०२ कायव्यूह ज्ञानम् । इति । अतोऽप्यवारूढः प्रधानसूक्ष्मनाडित्रय-
मूलगतकन्दचक्रे कृतस्थितिः कामतत्त्वानुरूढः शुक्रनिषेकं रसाभिद्रुतो
मेहनोत्सृष्टिं विद्ध्वा नातिपीडितश्च मन्दानन्दरूपगन्धशुक्रोत्सर्गं प्रति
१०५ यथेच्छकन्दस्थानादधोवर्तिशुक्ररसशल्कं प्रति नाडित्रयं प्रेरयति,
चोदयति। ताश्च यथाभूता एव तिस्रो नाड्यः कथिताः। एवं षट्-
चक्रासुरसि, उत षट्त्रिंशत्साहस्री नाडीनामवगन्तव्या। तस्यामेव
१०८ षट्चक्र्यामनुस्यूतोपचक्रग्रन्थि द्वादशकं यत्र द्व्यरं द्व्यरं उभयोः सन्धि-
युग्मम्। द्व्यरं द्व्यरं भुजयुगलसन्धियुग्मम्। तथा पञ्चारं पञ्चारं कर-
द्वयसन्धिद्वयम्, द्व्यरं द्व्यरं चोरुसन्धिद्वयम्। द्व्यरं द्व्यरं जानुद्वितय-
१११ सन्धिद्वन्द्वम्। पञ्चारं पञ्चारं पादद्वयीसन्धिद्वितयमिति षट्त्रिंश-
दरत्नैर्वोपचक्रग्रन्थि द्वादशकस्य प्रत्यरं पूर्ववदेव नाडिसहस्रमनुगत-
मिति द्विसप्ततिनैवोक्तानां द्विसहस्राणि निरूपितानि भवन्ति ।
११४ तस्मिंश्च द्विसप्ततिसहस्रनाडिवृन्दप्रतिनाडिसंस्थानमेकमेकं पञ्च पञ्च
शतानि नाडीनां लोमवाहिनीनामिति सार्धत्रिकोटिप्रमिता नाड्यः।
तेन एषु चक्रेषु चक्रनाथश्चरन् भोगानशेषेण च वैषयिकभोगांस्तान्
११७ यथायथमुक्तगत्या उपभुङ्क्ते ।। तदित्थम्——

पिण्डं परिणतं ज्ञात्वा जरया जर्जरीकृतम् ।
अशक्तः सर्वकार्येषु स्खलित्वा कम्पतेऽपि यः ।।
१२० रसास्वादविनिर्मुक्त इन्द्रियार्थं न विदन्ति ।
तदा तेन प्रकर्तव्या मतिरुत्क्रमणं प्रति ।।
आदौ तु सकलं भावं समालोक्यैवमाश्रयेत् ।
१२३ सोपानपदवीं तां तु स्वभ्यस्तां तत्त्वपद्धतिम् ।।
षड्विंशतिपदोपात्तां त्यक्त्वा ह्यूर्ध्वं व्रजेदथ ।
ओंकारव्याहृतेरन्तर्युक्त्यापानं समाहरेत् ।।
१२६ नासाग्रेणानिलं त्यक्त्वा हृदयं पूरयेत् ततः ।
पूरितं न त्यजेद्बाह्ये तदूर्ध्वं विनियोजयेत् ।।

१ योगसूत्र, ३।२९।

प्रोत्थितो हृत्कटाज्जीवो व्रजन् नाडिपथं परम् ।
१२९ तालुद्वारमथासाद्य ब्रह्मद्वारं विभेदयेत् ॥
उपोद्घातैस्त्रिभिश्चैव स्थिरधीः पिङ्गलाश्रयः ।
मनः शार्ङ्गे समाहृत्य बोधशक्तिं शरात्मिकाम् ॥
१३२ तथा विबोधितं कुर्यात् क्षणं ब्रह्मगुहाशयम् ।
चित्तलक्ष्यस्थितं तच्च संलीनं शाश्वते पदे ॥
कृत्वा सत्त्ववरं चैनं विनिर्गत्य परान्तरात् ।
१३५ शतकोटिसहस्रांशुशीतचित्रगभस्तिरुक् ।
स भवेद्ब्रह्मपरमं यद्विष्णोः परमं पदम् ॥
तत्प्रविष्टो निराभासः परिचिन्मात्रलक्षणः ।
१३८ शून्ये शून्यत्वमापन्नः क्षीरे क्षीरान्तरं यथा ॥
स जीवः परमानन्दे एकीभावमुपागतः ।
तत्र सायुज्यमाप्नोति यत्र न स्यात् पुनर्भवः ॥

१४१ तथा चैतदेवापरार्के--

प्राङ्नाभ्यां हृदये चाथ तृतीया च तथोरसि ।
कण्ठे मुखे नासिकाग्रे नेत्रे भ्रूमध्यमूर्धसु ॥
१४४ किंचित् तस्मात् परस्मिंश्च धारणा परमा स्मृता ।
दशैताः धारणाः प्राप्य प्राप्नोत्यक्षरसात्म्यताम् ॥
सूक्ष्मास्तु धारणाः सप्त भूराद्या मूर्ध्नि धारयेत् ।
१४७ धरित्रीं धारयेद्योगी गन्धसौक्ष्म्यं प्रपद्यते ॥
आत्मानं मन्यते पृथ्वीं तद्गन्धं च जहाति सः ।
तथैवाप्सु रसं सूक्ष्मं तद्वद्रूपं च तेजसि ॥
१५० स्पर्शं वायौ तथा तद्वद्बिभ्रतस्तस्य धारणाम् ।
व्योम्नः सूक्ष्मप्रवृत्तस्य शब्दं तद्वज्जहाति सः ॥
मनसा सर्वभूतानां मन आविशते यदि ।
१५३ मानसीं धारणां बिभ्रन्मनःसौक्ष्म्यं जहाति सः ॥

---

१ याज्ञवल्क्यस्मृतावपरार्कः, ( आनन्दा०, पृ० १०२३-२४, १०२५ -२६ ) यत्रेदं मार्कण्डेयपुराणवचनं प्रदत्तम् ।

तद्वद्बुद्धिमशेषाणां सत्त्वानामेत्य योगवित् ।
परित्यजति संप्राप्य बुद्धिसौक्ष्म्यमनन्तरम् ॥
१५६ एतासां धारणानां तु सप्तानां सौक्ष्म्यमाप्तवान् ।
दृष्ट्वा दृष्ट्वा ततः सिद्धिं त्यक्त्वा त्यक्त्वा परां भजेत् ॥
एतान्येव च संधाय सप्त सूक्ष्माणि पार्थिव ।
१५९ भूरादीनां विरागोऽत्र सद्भावज्ञस्य मुक्तये ॥

विष्णुः—ऊरुस्थोत्तानचरणः सव्ये करे करं न्यस्य, तालुस्थाचल-
जिह्वश्च दन्तैर्दन्तानसंस्पृशन् स्वनासाग्रं पश्यन् दिशस्त्वनवलोकयन्
१६२ विभीः प्रशान्तात्मा चतुर्विंशत्यात्मतत्त्वैर्व्यतीतं चिन्तयेत् । नित्य-
मतीन्द्रियमगुणं शब्दस्पर्शरसरूपगन्धातीतं सर्वस्थमतिस्थूलं सर्व-
स्थमतिसूक्ष्मं सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वतः
१६५ शक्तिमेव ध्यायेत् । ध्याननिरतस्य संवत्सरेण योगाविर्भावो भवति ।
अथ निराकारे लक्ष्यबन्धं कर्तुं न शक्नोति, तदा पृथिव्यप्तेजोवाय्वा-
काशादिमनोबुद्ध्यात्माव्यक्तपुरुषाणां पूर्वं पूर्वं ध्यात्वा तत्र लब्ध-
१६८ लक्ष्यस्तं परित्यजेत्, अपरमपरं ध्यायेत् । एवं पुरुषो योगमारोहेत् ।
तत्राप्यसमर्थो हृदयपद्मस्य मध्ये दीपवत् पुरुषं ध्यायेत् । तत्राप्य-
समर्थो भगवन्तं वासुदेवं कुण्डलिनमङ्गदिनं वनमालादिविभूषितो-
१७१ रस्कं स्वरूपं चतुर्भुजं शङ्खचक्रपद्मधरं चरणमध्यगतवसुधं ध्यायेत् ।
यद्यद्ध्यायति तत्तदाप्नोति इति ध्यानगुह्यम् । तस्मात् पूर्वमेव क्षरं
त्यक्त्वा अक्षरमेव ध्यायेत् । न पुरुषं विना किंचिदप्यक्षरमस्ति ।
१७४ तं प्राप्य मुक्तो भवति ॥ ५ ॥

अन्तकाले हि शरीरयन्त्रकेऽस्मिन् विघटमाने योगिनामयोगिनां वा करणवैकल्यस्यावश्यंभावित्वात् कथं परमेश्वरस्मरणोत्पत्तिरित्याशङ्का-
३ मपनुदति—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

यः कश्चिदयोगी योगी वा, यं यं वापि यं कंचन पदार्थं स्मरन्,

---

१ इदं विष्णुपुराणवचनमपि अपरार्केण उद्धृतं १०२६–२७ पृष्ठयोः ।

अन्ते यियासुतासंज्ञे शरीरपरिणामे प्राणवियोगकाले, सूक्ष्मे कलेवरं त्यजति । हे कौन्तेय सदा सर्वस्मिन् प्रसवोत्तरं शरीरस्थितिभोगसमये, तद्भावभावितः, तेन तेन भावेन पदार्थेन भावितं वासितं हृदयं [यस्य] सः, तं तमेव भावमेति, जन्मान्तरे तमेव प्राप्नोति । तत्कालं स्मरणमस्तु वा नवेति नियमो नेत्यर्थः । तथा चैतद्विषय एव प्रश्नोत्तरं पुराणे ।

तस्मात् पूर्वं परेऽध्यस्तो येनात्मा ब्रह्मणि स्वयम् ।
स्मरणं तु कथं तस्य प्राणान्ते समुपस्थिते ॥
स्वस्थचेष्टास्तु ये मर्त्याः स्मरन्ति मम नारद ।
काष्ठपाषाणतुल्यांस्तानन्तकाले स्मराम्यहम् ॥

अन्तकाले काष्ठपाषाणतुल्यांश्चैतन्यविगमान्मत्स्मरणासमर्थानहमेव तान् स्मरामि स्वसायुज्यं नयामीत्यर्थः । तथा च व्याख्यातमिदमभिनवगुप्तपादैः—

तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥

इति । तस्मादेवं विध्यनुवादौ, सदा येन भावितमन्तःकरणं तदेवान्ते प्रयाणानन्तरे प्राप्यते । स्मर्यते वा न वेति नात्रनिर्बन्धः । अन्वाचयश्चायमपिशब्देन सूचितः । वा शब्दस्तु स्मरणस्य विकल्पमाह । तेनेत्थमत्रपदसंगतिः, सदा यं यं भावं भावयति तमन्ते स्मरन्नस्मरन् वा देहं त्यजन् तं तमेवैति । यत् तु भारतस्य मृगप्राप्तिस्तत्र सदा तद्भावभावित्वमेव हेतुरिति । तस्मात् मत्प्रेप्सुर्मत्परम एव सदा स्यादित्यत्र तात्पर्यम् । विस्तृत्य चैतदुपदिष्टं देशिकैः—

संभवो जन्म सत्ता च मृतिश्चाथ यियासुता ।
एताः पञ्च शरीरस्य परिणामविपत्तयः ॥

इत्यत्र । संभवो, भोगः जन्मभोगः स्थितिभोगश्चेति तिस्रः शरीरस्य प्रागवस्था भवन्ति । तथा हि । जननीजठरे चेतनायां संजातायां गर्भभोगः । प्रसवसमये जन्मभोगः । प्रसूतस्य बालादेः वयःपरावृत्त्या विचित्रः स्थितिभोगः । मृतिभोगो यियासुता च द्वे चरमावस्थे । तत्र

---

१ द्रष्टव्या अभिनवगुप्तकृता गीताव्याख्या । 'तीर्थे' इत्यादिवचनं तु परमार्थसारे ( श्लो० ८३ ) द्रष्टव्यम् ।

मृतिभोगो विचित्रा शरीरपीडा । यियासुतातिवाहिकशरीरबन्धः । तामेव च यियासुतामुद्दिश्य यं यं वापि स्मरन् भावमित्यादि प्रवृत्तम्। अत एव भूतभविष्यदर्थविरहितार्थवादिनः स्मरन्नित्यस्य शतृप्रत्ययस्य यथार्थः प्रयोगः स्यात्।। एतदेव च वितत्य श्रीतन्त्रालोके प्रतिपादितम्—

मृतिभोगः समस्तोऽयं मर्मच्छिन्मूढताक्षमा ।
तत्रेन्द्रियाणां संमोहः श्वासायासपरीतता ।।
यस्त्वसौ क्षण एवैकश्चरमः प्राणनात्मकः ।
सा देहत्यागकालांशकला प्राणवियोगिनी ।।
तस्यां यदेव स्मरति प्राक्संस्कारप्रबोधितः ।
तदेव रूपमभ्येति सुखदुःखविमोहितम् ।।

इति । तथा च—

पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा ।

इति श्रुतौ चैता एव शरीरावस्था उक्ताः ।। ६ ।।

पूर्वोक्तमेव पुनः स्फुटयति—

**तस्मात् सर्वेषु कालेषु मामनुस्मर युद्ध च ।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम्[1] ।। ७ ।।**

यस्मात् सदा यो यद्भावभावितः स तमेवैतीति, तस्मात् कालेषु सर्वेषु वैमर्शिकेषु व्यावहारिकेषु मां परत्मानमनुस्मर, अनुसंधेहि । च पुनः, युद्धं च कुरु, युद्धकरणे तव न काचिद्धानिरित्याह । मय्यर्पितमनोबुद्धिरिति । हेतुदर्शनमेतत् । मनः संकल्पविकल्पौ, बुद्धिरध्यवसायः ।। ७ ।।

अत्रोपायमाह—

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना[2] ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ।। ८ ।।**

यमनियमादीनां बहिरङ्गानां धारणाध्यानसमाधीनां चान्तरङ्गानां

---

१ '°स्यसंशयः' इति प्रचलितपाठः ।

२ 'चेतसानन्य°' इति रामकव्यभिनवगुप्तयोः पाठः, कलकत्तामातृकायामपि दृश्यते ।

अभ्यासेन योगो भ्रूमध्यादिदेशे चिरं चित्तस्य बन्धाद्धारणादार्ढ्यम् । तथा चात्रैव देशे परमे पुंसि ध्येयेऽनवरतज्ज्ञानैकतानतया ध्यानदार्ढ्यम् । ध्यानस्यैव च स्वरूपशून्यत्वात् सततमर्थमात्रनिर्भासतया समाधिदार्ढ्यमभ्यासयोगः । तद्युक्तेन चेतसा, अत एवानन्यगामिना अन्यविषयमगच्छता । परमं पुरुषं दिव्यमनुचिन्तयन् प्रोक्तक्रमेणानुसंदधानः तमेव पुरुषं परमं याति ॥ ८ ॥

तस्य विशेषणान्याह—

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः पुरस्तात् ॥ ९ ॥

कविं सर्वज्ञं, पुराणं कालेनानवच्छिन्नं पूर्वेषामपि पूर्वतरं, अनुशासितारं शास्त्रद्वारेणोपदेशदानात् स्वस्वकर्मणि नियोजकं, अणोरणीयांसं सर्वत्रान्तरनुप्रविश्य प्रेरकतयातिसूक्ष्मम् । सर्वस्य कर्मफलस्य च धातारं कर्तारम् । 'अस्थूलमनण्वह्रस्वमदीर्घमलोहितम्' इति रूपादिप्रतिषेधात् । अचिन्तरूपं आदित्यवर्णं ज्योतिर्मयं सर्वप्रकाशकं तमसः पुरस्तात् । अज्ञानमेव तमोऽतीत्य स्थितमित्यर्थः ॥ ९ ॥

इयमहामलीदीक्षाकर्तव्या योगिनो गुरुः ।
अनभ्यस्तप्राणचारः कथमेनां करिष्यति ॥

इति प्राणचारोपदेशमाह—

प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

भक्त्येत्युपलक्षणात् भक्तिश्रद्धावीर्यस्मृतिसमाधिप्रज्ञाभिर्योगिनामुपाय-

---

१ 'परस्तात्' इति प्रायः सर्वेषां पाठः, कलकत्तामातृकावर्जम् ।

२ बृहदारण्यकोपनिषद्, ३।८।८।

प्रत्ययस्य निर्वीजस्य समाधेर्हेतुभूताभिः प्राप्तं यद्योगबलं दार्ढ्यम्, तेन
६ युक्तः। अत एवाचलेनमनसा च युक्तः, न तु प्रागुक्तनीतेः स्मरन्न-
स्मरन्वेति। तत्तद्भूमिजयेन भ्रुवोर्मध्ये सम्यक्, सावधानतया, प्राण-
मावेश्य तं परं पुरुषं दिव्यमुपैति ॥ १० ॥

अस्य पदस्य दुःसाधनत्वेन दुरधिगमत्वात्। पुनः पुनरुपायत्वं दर्शयति —

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत् ते पदं संग्रहेणाभिधास्ये ॥ ११ ॥

३ सम्यग्गृह्यते निश्चीयतेऽनेनेति संग्रह उपायः, स तु सतताभ्यासः
इत्यभिनवगुप्तपादाः[2] ॥ ११ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

श्लोकोऽयं प्राग्दर्शितोत्क्रान्तिलक्षणेन गतार्थः। सर्वद्वाराणि संय-
म्येति धारणाध्यानसमाधिभिः क्रमेण सर्वेभ्यो नवभ्यो द्वारेभ्यो वा
३ प्राणं निरुध्य ॥ १२ ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥

ओंकारस्योच्चारः —

ओंकारव्याहृतेरन्तर्युक्त्यापानं समाहरेत्।

३ इतिसंहितोक्तेः, अपानसंहाराय उदानोद्बोधनाय चेति रहस्यविदः।
वैष्णवपदप्राप्त्युपायजपतयेति श्रुतिविदः। गुरवस्तु—अपानसमा-
हारः, उदानोद्बोधः, परप्राप्त्युपाय एतज्जयश्चेति समुदितं त्रयमेव

१ 'संग्रहेण प्रवक्ष्ये' इति प्रचलितपाठः।
२ गीताटीकायाम्।

हेतुरित्यर्थ इत्याहुः। तथा च तैत्तिरीयश्रुतौ[1]—ॐ इति ब्रह्म। ओमितीदं सर्वम्। इत्यादौ व्याख्यातं श्रुतिविद्भिः परपदप्राप्त्युपायत्वम् ॥ १३ ॥

अत्र सतताभ्यासस्यावश्यकर्तव्यत्वमाह—

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य देहिनः[2] ॥ १४ ॥

अनन्यचेता धारणादिना स्थिरीकृतचित्तः, यो योगी सततं निरन्तरं नित्यशो दीर्घकालं यावज्जीवं वा स्मरति । पार्थ तस्य योगिनो नित्ययुक्तस्य सदा निरन्तरं च योगाभ्यासिनः सुलभः । अत्र श्रीमदभिनवगुप्तपादा रहस्यार्थान्तरमप्याहुः[3] । सर्वद्वाराणि चक्षुरादीनि संयम्य रूपादिविषयेभ्यो व्यावर्त्य, न तु द्वाराणि विष्ठास्थानादीनि । मनः प्राणसारथिं चित्तमिच्छाशक्त्यात्मनि मूर्ध्नि सकलतत्त्वातीतो धारयन्निति कायनियमेन, ओमिति जपन्निति वाङ्नियमेन, मामनुस्मरन्निति चेतसोऽनन्यगामिनो नियमेन, प्रयाति। दिनादिनमपुनरावृत्तये गच्छति । सततं परबोधस्वरूपतामात्मनोऽवधारयति । पुनरिदं सकलापत्स्थानं जन्म मा भूयादितीत्थं यो मामनन्यचेताः स्मरति, स ततो मद्भावमेव याति । नत्वत्रोत्क्रान्तिमात्रे हठो व्यासस्य परब्रह्माद्वैतपदोपक्षेपविरोधी युक्तः । तथा चोक्तम्—

व्यापिन्यां शिवसत्तायामुत्क्रान्तिर्नाम निष्फला ।
अव्यापिनि शिवे नाम नोत्क्रान्तिः शिवदायिनी ॥

इति ॥ १४ ॥

स्वप्राप्तेर्माहात्म्यमाह—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

अशाश्वतमनवस्थितस्वरूपम् ॥ १५ ॥

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

---

१ तैत्तिरीयोपनिषद्, १।८।
२ 'योगिनः' इति प्रचलितपाठः, अभिनवगुप्तटीकायामपि क्वचिदुपलभ्यते।
३ निजगीतार्थसंग्रहे ।

ब्रह्मणः षड्विंशकस्य महाविष्णोर्भवनं, तेन सहैकरूपतापत्तिः, सामरस्यं, तस्मात् आ तत्पर्यन्तम् । यावन्नोपायप्रत्ययेन निर्बीजसमाधिनोत्क्रान्तिरूपेण कैवल्यमाप्यते तावत्, लोकाः लोच्यन्ते दृश्यन्ते चतुर्विंशत्तत्वसंघातापेक्षिणः जीवाः । पुनरावर्तिनः पुनः पुनः जायन्ते म्रियन्ते च । मामुपेत्य पुनर्नोत्पद्यन्ते । विवेकख्यात्या स्वच्छीभूय प्रेक्षकवदवस्थितानामपवर्गो भवतीत्यर्थः । तथा चोक्तम् (सां०का०,४४)—

ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ।

इति । अस्यार्थः तावदेव प्रकृतिर्भोगमारभते यावन्न विवेकख्यातिः । विवेकख्यात्या मोचयतीति विपर्ययात् तत्त्वज्ञानाभावाद्बन्धः । स च त्रिविधः । प्राकृतिकः वैकृतिको दाक्षिणश्च । तत्र येषां प्रकृतावेवात्मबुद्धिस्तेषां प्राकृतिको बन्धः । ते पूर्णं युगसहस्रमव्यक्तके स्थित्वा पुनरावर्तन्ते । वैकृतिको बन्धस्तु तेषां येऽहंकारादीनेव पुरुषत्वेन जानन्ति । ते हि—

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ।
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ॥

इतीत्थं योगिनां सांख्यानां चानुशासनेन, पुरुषतत्त्वानभिज्ञाः प्रकृत्यादौ विलीय पुनरावर्तन्ते इत्यर्थः ॥ आ ब्रह्मभुवनादित्यपि व्याचक्षते । ब्रह्मभुवनेन सह सर्वे लोका भूरादय इति । तथा च विष्णुधर्मेषु वज्रं प्रति मार्कण्डेयः प्रथमे काण्डे त्रिसप्ततितमेऽध्याये—

पूर्णं वर्षशतं सर्वं ब्रह्मा जीवति यादव ।
ब्रह्मा यथा परिच्छिन्नः पौरुषे दिवसः स्मृतः ॥

तावती च निशा तस्य यस्येदं सकलं जगत् ।
वेदेषु गीयते योऽसौ पुरुषः पञ्चविंशकः ॥

तस्योन्मेषस्तु दिवसो ब्रह्मणः परमेष्ठिनः ।
निमेषस्तु तथा रात्रिस्तच्च कल्पं प्रकीर्तितम् ॥

---

१ टीकायां 'भवनम्' इति व्याख्यातम् । मूले तु 'भुवनम्' इति पठितम् । अन्ते 'भुवनम्' इति पाठान्तरेण स्वीकृत्य व्याख्यातम् ।

२७ इति । सप्तसप्ततितमेऽध्याये—

पूर्णे संवत्सरशते संहृत्य सकलं जगत् ।
मोक्षस्थानमनुप्राप्ते देवदेवे पितामहे ॥
३० अण्डस्याभ्यन्तरे सर्वं तदाम्भोभिः प्रपूर्यते ।
शरीरधारिणः सर्वे तदा नश्यन्ति पार्थिव ॥
अन्तर्गतेन तोयेन भिन्नमण्डं जगत्पते ।
३३ पूर्णे ब्रह्मायुपि बाह्यस्थेऽम्भसि [प्रवि]लीयते ॥
एवं सा जगदाधारा धारातोये प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥
३६ खे वायुः प्रलयं याति मनस्याकाश एव च ।
मनः प्रलीयते बुद्धौ बुद्धिरात्मनि लीयते ॥
अव्यक्ते लीयते चात्मा अव्यक्तं पुरुषे परे ।
३९ अनन्तानि तथोक्तानि यान्यण्डानि मया पुरा ॥
सर्वाणि तानि संहृत्य समकालं जगत्पतिः ।
प्रकृतौ तिष्ठति तदा सा रात्रिस्तस्य कीर्तिता ॥
४२ रात्रौ तस्यां व्यतीतायां पुनरेव जगत्पतिः ।
सर्वं विधत्ते धर्मज्ञ यथापूर्वमुदाहृतम् ॥

तथा चात्रैकाशीतितमेऽध्याये—

४५ महाकल्पक्षये जीवाः सर्वे ते परमेश्वरम् ।
प्राप्यापि विनिवर्तन्ते विना ज्ञानेन यादव ॥
भूय एव तदा लोकान् सर्गे सृजति तान् विभुः ।
४८ कल्पमध्ये [च] कल्पान्ते ज्ञानोज्झितकलेवराः ।
प्राप्नुवन्ति परं स्थानं यद्विष्णोः परमं पदम् ॥

इति ॥ १६ ॥

एतदेव प्रपञ्चयति—

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

---

१ '॰महर्ये' इति रामकव्यभिनवगुप्तयोः पाठः, गोण्डलकलकत्तामातृकयोरपि ।
२ '॰रात्रिविदो' इत्यत्रैव दृश्यते पाठः, प्रायः प्रामादिकः ।

दिव्यया संख्यया चतुर्युगाणां सहस्रं पर्यन्तोऽवधिर्यस्य ॥ १७ ॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

अव्यक्तान्मूलप्रकृतेः व्यक्तयो महदादयः अहरागमे पौरुषे दिवसे, न तु हैरण्यगर्भके ॥ १८ ॥

एतदेवोपदेशस्थैर्याय निगमयति—

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

भूतान्तं महदादीनां ग्रामः संघातः, स एव न तु कश्चिदन्यो नवोत्पन्नः । तथा च लक्ष्मीपतिसंहितायामयमेवार्थः—

क्षीराद्घृतमिवापन्ना न यान्ति क्षीरतां पुनः ।
ब्रह्मैक्यमुपसंप्राप्ते नायात्येव पुनर्भवम् ॥
निर्मूलो वा निराधारो न ततः संप्ररोहति ।
ज्ञानासिच्छिन्नकर्मैव न भूयः संसरत्यपि ॥
प्रलये संप्रविष्टा ये परिपक्वकषायताम् ।
सृष्टिमार्गेण ते सर्वे संसरन्ति पुनः पुनः ।
इत्येष सुतनु प्रोक्तो मुक्तामुक्तविनिश्चयः ॥

इति ॥ १९ ॥

तदेवं प्रकृतिलयपर्यंतं बन्धमुपदिश्य यत् कैवल्यधाम तदेवोपदिशति—

परस्तस्मात् तु भावोऽन्यः पुरुषाख्यः सनातनः ।
यः सर्वेष्वपि भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

तस्मात् भूत्वा भूत्वा प्रलीयमानात् चतुर्विंशतिसंघातादन्योऽप्रली-

---

१ 'भावोऽन्योऽव्यक्तोऽव्यक्तात्' इति प्रचलितपाठः । 'भावोऽन्यो व्यक्ताव्यक्तः' इति काश्मीरपाठः । कलकत्तामातृकायां 'परः' इति स्थाने 'परात्' इति लिखितम् ।

२ 'यः स सर्वेषु' इति प्रायः सर्वत्र पाठः ।

यमानो नित्यः, परः प्रकृतेरतिरिक्तः, अव्यक्तः पुरुषाख्यः, सनातनः
परिणामशून्यः, भावः सत्तामद्वस्तुभूतः, सर्वेषु भूतेषु लिङ्गाख्येषु
६ प्रकृत्यादिसर्गान्ते नश्यत्सु अपि न विनश्यति ॥ २० ॥

**अव्यक्तोऽक्षरइत्युक्तस्तमाहुः परमां गतिम् ।**
**यं[1] प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

यदक्षरं वेदविदो वदन्ति (श्लो० ११) इत्यादि यदुक्तं, तत्राव्यक्तः
पुरुष एवोक्तस्वरूपः अक्षर इत्युक्तः, यमाहुः परमां गतिम् । ततः
३ परमन्यद्गन्तव्यं नास्ति, सर्वेषां तत्रैव परिनिष्ठितत्वात् । न तु विकृ-
तीनां प्रकृतिरिवान्यो गन्तव्य इत्यर्थः । 'विशन्ति यद्यतयो वीत°'
(श्लो० ११) इति यदुक्तं, तन्निर्वर्णयति—यं प्राप्य न निवर्तन्ते
६ तद्धाम परमं मम । मम परमात्मरूपस्य षड्विंशस्य महाविष्णोः तद्धाम
परमिति स्वाभिन्नम् । न तु ब्रह्मादिस्थानवत् स्थानिनोऽस्य कोपि देशः
इत्यर्थः ॥ २१ ॥

स्वस्वरूपमेवाह—

**पुरुषः स परः पार्थ भक्त्या लभ्यो ह्यनन्यया[2] ।**
**मां प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन[3] ।**

स परः पुरुषः एभ्यः प्रकृतिसापेक्षेभ्यः पुरुषेभ्योऽन्यः नित्यशुद्धबुद्ध-
३ स्वभावः परचैतन्यरूपः षड्विंशकः । पार्थ भक्त्या लभ्यस्त्वनन्ययेति
चित्तस्यानन्यविषयत्वेन पूर्वोक्तयोगेन लभ्य इत्यर्थः ॥ अस्यैवोपदे-
शस्थैर्याय लक्षणान्तरमाह—

**यस्यान्तःस्थानि भूतानि यत्र सर्वं प्रतिष्ठितम्[4] ॥ २२ ॥**

६ स्पष्टम् ॥ २२ ॥

तदेवमपुनर्निवृत्तिप्रकारमुपदिश्य चित्तस्य दृढभूमिजयिन आन्तर-

---

१ 'यत् प्राप्य' इति कलकत्तापाठः ।

२ 'लभ्यस्त्व°' इति प्रचलितः पाठः, प्रायेण काश्मीरपाठश्च ।

३ अयमधिकोऽर्धः प्रायः सर्वत्र काश्मीरपाठे ।

४ 'येन सर्वमिदं ततम्' इति अन्त्यचरणस्य प्रचलितपाठः ।

प्राणादित्यसंचारक्रमेण तत्तद्देशबन्धपूर्वकमुत्तरोत्तरजेयं कालक्रमविशेषमुत्क्रान्तिपददर्शनार्थमाह—

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

यत्र यस्मिन् बहिःसूर्यसंचारोपाधिकस्थूलकालापेक्षालक्ष्ये आध्यात्मिके वक्ष्यमाणप्राणादित्यसंचारोपाधिके सूक्ष्मे काले योगिनोऽभ्यस्तप्राणसंचारविचाराः प्रयाता ऊर्ध्वरेचकक्रमेण प्राणानुत्क्रामितुमुपक्रान्ताः । अनावृत्तिं प्रागुक्तामपुनरावृत्तिं यान्ति प्राप्नुवन्ति, चकारात् अनभ्यासेन ततः स्खलितश्चेत्, आवृत्तिं प्राप्ताया भूमेरधोगमनात् पुनरावर्तनं जन्मप्राप्तिं यान्ति, भरतसत्तम तं कालं वक्ष्यामि ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्ला[१] षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

अगति, ऊर्ध्वं गच्छतीत्यग्निः । निर्गमक्रमात् सुषुम्णाया ऊर्ध्वं स्पन्दमानः प्राण एव जीवपर्यायः । ज्योतिः तत्तत्प्रमेयप्रकाशकत्वात् सूर्यो भवतीत्यन्वयः । अहो दिनं, ईदृशस्य प्राणादित्यस्य संचारेणोपलक्षितः कालविशेषो दिनं भवति । अनयैव कलनया षोडशभिरहोरात्रैः पक्षः, द्वौ पक्षौ मासः, षण्मासा अयनमिति वक्ष्यमाणसंहितोक्तिक्रमेण दिनमुत्तरायणं च । प्राणस्योद्गच्छतो गतिः शुक्लाशुक्लसंज्ञा भवति । 'शुक्लकृष्णे गती ह्येते' ( श्लो० २६ ) इति वक्ष्यमाणसिद्धान्तदर्शनात्, स्त्रीलिङ्गः शुक्लाशब्दः कृष्णाशब्दश्च । तत्रैवंविधे संहितोपदेशक्रमविशेषे दर्शयिष्यमाणे कालविशेषे, तथैव द्वादशान्ताख्ये देशविशेषे, वा प्रयाताः । संयमाभ्यासप्रकर्षेण याता, ऊर्ध्वरेचकक्रमेणोत्क्रामितप्राणाः ब्रह्मविदो जनाः, ब्रह्म गच्छन्ति । प्रागुक्तं कैवल्यमाप्नुवति । न पुनरावर्तन्ते इति यावत् ॥ २४ ॥

**धूमो रात्रिस्तथा[२] कृष्णा षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

---

१ 'शुक्लः' इति प्रचलितपाठः प्रायः सर्वत्र दृश्यते ।

२ 'धूमो रात्रिस्तथा कृष्णः' इति प्रचलितपाठः गोण्डलकलकत्तामातृकयोस्तथा अभिनवगुप्तटीकायामपि ।

उणादयो बहुलमित्युणादीनां कर्मकर्तरिव्युत्पत्त्या धूयतेऽधो गम्यते स्वयमिति धूमः । ऊर्ध्वरेचकासंभवात् प्राप्ताया भूमेः प्रतिनिवृत्त्याधोमुखीभवन् प्राणादित्य एवापानसंज्ञामापन्नः । चान्द्रमसं, चन्द्रमसि संक्रान्तं, ज्योतिः । सूर्यरश्मिरेव चन्द्रमन्डले प्रतिबिम्बिता चन्द्राकारतया प्रतिभातीति प्रसिद्धेः ।

सूर्य एव हि सोमात्मा सोऽथ विश्वमयः स्थितः ।

इति रहस्यश्रुतेश्चानुगमात्, तदुपलक्षितः कालः रात्रिरिति । प्राग्वत् कलनया रात्रिः । दक्षिणायनं चायनसंचारविशेषात् । कृष्णा कृष्णाख्या गतिरित्यन्वयः । तत्र ईदृशे कालविशेषे निवर्तते । दर्शयिष्यमाणं देशविशेषं हृपद्ममेव प्रतिनिवृत्तो लब्धदृढभूमिर्योगी जन्मैव प्राप्नोति । न तु मोक्षमित्यर्थः । तथा हि जीवादित्यः प्रागुक्तव्यतिरेकेण चित्तप्रलयबन्धहीनः प्राणापानप्रवाहपरंपरायामेवावर्तत इति रहस्यविदः । तथा चेत्थमेव श्रीभागवतद्वितीयस्कन्दे द्वितीयेऽध्याये (श्लो० १९–२४) श्रीभगवता—

इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः ।
सुपार्ष्णिनापीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्रमः ॥

नाभ्यां स्थितं हृद्यधिरोध्य तस्मादुदानगत्योरसि तं नयेन्मुनिः ।
तत्रानुसंधाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ॥

तस्माद् भ्रुवोरन्तरमुन्नयेत निरुद्धसप्तायतनोऽनपेक्षः ।
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन् विसृजेत् परं गतः ॥

यदि प्रयास्यन् नृप पारलोकं वैहायसानामुत यद्विहारम् ।
अष्टाधिपत्यं गुणसंनिवापे सहैव गच्छेन्मनसेन्द्रियैश्च ॥

योगीश्वराणां गतिमाहुरन्तर्बहिस्त्रिलोक्याः पवनान्तरात्मनाम् ।
न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम् ॥

वैश्वानरं यान्ति विहायसा गतः सुषुम्णया ब्रह्मपथेन शोचिषा ।

इत्यत्र । वैश्वानरमग्न्याभिमानिनीं देवतामिति व्याख्यानात् स्पष्टमुदिष्टम् । तथा च—

---



१ अष्टाध्यायी ३ । ३ । १ ।

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं नो इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥[1]

इत्येत्रापि वृत्तौ, शं सुखं, प्राणवृत्तेरह्नश्चाभिमानी देवतात्मा मित्रो नोऽस्माकं भवतु । तथैवापानवृत्ते रात्रेश्चाभिमानी देवता वरुणः चन्द्रात्मेत्यादिना प्रकटोक्तमेव सूर्याचन्द्रमसोः प्राणापानार्थत्वम् । तथाचात्राध्यात्मिककालविशेषाणां दिनरात्रिपक्षमासायनानां लक्षणं श्रीलक्ष्मीपतिसारे द्वितीये विलासे श्रीभगवान् स्वयमेवाह—

प्राणापानौ स्मृतः कालः सम्यक् कालस्य कर्षणात् ।
याथातथ्यान्निजव्याप्त्या कालसंकर्षणीति चित् ॥
प्राणो हि दिवसः पक्षो ज्योत्स्नावानुत्तरायणम् ।
अपानो हि निशा पक्षः तामिस्रो दक्षिणायनम् ॥
षट्षडङ्गुलराश्यन्तर्मृगकन्येऽयनद्वये ।
वहतो वातुलासंधौ प्राणान् कोपानशीतगुः(?) ॥[2]

इति । तथा चैतत् विवृतावप्युदाहरणसंग्रहः—

कालः सर्वाणि भूतानि कलयन्न व्यवस्यते ।
वायुर्भूत्वा कालचक्रं प्रपञ्चो ह्येवमस्त्यतः ॥
समानाख्यांशसंप्राप्त इडयापानतां भजन् ।
द्वादशाङ्गुलमौन्नत्यात् प्राणिनां नाभिमण्डलात् ॥
षट्त्रिंशदङ्गुलेनातः परिणाहः समन्ततः ।
तन्मण्डलेन सहितश्चारः षट्त्रिंशदङ्गुलः ॥
योगिनामथवा नासा द्वादशान्ताः शरीरिणाम् ।
ऊर्ध्वं सव्यपथः प्राणः सूर्यो राशीः षडह्निकम् ॥
चरन् स्वभावान्मकराद्यूर्ध्वं राशिगणे क्रमात् ।
अपानेन्दुं च षण्णाड्यापानमार्गेण संवहन् ॥
कर्किपञ्चास्ययुवतितुलालिधनुषां गणम् ।
स्थानेषु षट्सु तेष्वेव यावत् हृदयकोटरम् ॥
पञ्चान्निशा ततश्चोत्तरायणादक्षिणायनम् ।
पक्षौ सितासितौ देवपितृयाणद्वयी च तत् ॥

---

१ ऋग्वेद, १।९०।९।
२ एतान्येवाक्षराणि मातृकायाम् ।

लयोदयौ दुःखहर्षौ निग्रहानुग्रहावपि।
स्थानानि द्वादशार्काश्च मासा द्वादशराशयः।
शुभाशुभग्रहाः सर्वे स्वदेहेन्द्रियदेवताः॥
षडङ्गुलं राशिरूपमुदयास्तमयं द्वयम्।
सूर्याचन्द्रमसावेतौ प्राकाम्याद्ब्रह्ममध्यगौ॥

षडङ्गुलराशिस्थानान्याह—

हृदयात् कण्ठमेतस्मात् तालुभालं च तालुतः।
शिरो ललाटान्मूर्ध्नोऽपि द्विषट्कं देवयानतः॥
नासिक्याद्वादशान्ताद्वा भजेन्मनुजवर्त्मतः।
पुनर्द्विषट्कान्मूर्धान्तं भ्रूतालुगलहृत्पदम्॥

इत्यादि। यस्त्वत्र षट्त्रिंशत्तत्त्वापेक्षया तत्तद्भुवनाधिष्ठेयाधिष्ठातृक्रमेण लयोदयविस्तरः श्रीमदभिनवगुप्तपादादिभिस्तत्र तत्र विवृतः, सोऽत्र—

अदीक्षितानां पुरतो नोच्चरेच्छिवसंहिताम्।

इति समयाचारभङ्गभीत्या न दर्शितः। प्राप्तदीक्षैस्तु दक्षैस्तत एव वीक्ष्य विचार्य इति शुभम्॥ अपि च सर्वागमसंमतान्तरकालकलनाप्रकारः स्फुटं लिख्यते। आभ्यन्तरे हि हृत्कर्णिकैव मेरुः। तदुपरि चिज्ज्योतिमात्ररूपस्यात्मनो ध्रुवस्यानुलग्नः प्राणादित्यः, हृत्कर्णिकोपकण्ठप्रधाननाडीमुखस्पर्शेन प्रदक्षिणमावर्तमानः, तत्तद्दिनरात्रिपक्षमासर्तुक्रमेणोत्तरदक्षिणायने विभजति, बाह्यादित्यवदिति। यथा मानुष्याक्षिनिमेषस्याष्टमांशः त्रुटिः। चतस्रस्त्रुट्यः प्राणायामः। चतुर्भिर्यामैः दिनं, तथैव रात्रिरिति। द्वात्रिंशता त्रुटिभिरहोरात्रः। इत्थमेव पक्षमासर्तुवर्षकल्पना॥ तथा चात्र देशक्रमोऽपि। हृदयात् कण्ठान्तं हि दशाङ्गुलं, तत्रैकाङ्गुलं त्यक्त्वा नवाङ्गुलं तावदेकोऽह्नः प्रहरः। ततोऽपि नवाङ्गुलं तालुमध्यं यावत् द्वितीयः प्रहरः। स एव मध्याह्नः। अत्र विश्रान्तस्य योगिनो जपादि मोक्षदम्। तालुमध्यात् भ्रूमध्याङ्गुलत्रयोर्ध्वो नवाङ्गुलं तृतीयः प्रहरः। भ्रूललाटत्र्यङ्गुलादूर्ध्वं द्वादशान्ते चतुर्थः प्रहरः। इतीत्थं हृदयादूर्ध्वं संचरतः प्राणस्य गत्या द्वादशान्तं यावद्दिनम्। तदेव दिनचतुर्थप्रहरान्ते प्राणस्य प्रकाशावेश-

विश्रान्तिरूपं त्रुट्यर्धं सायंसंध्या। तदा तु त्रुट्यर्धं संघट्टपदे विश्रम्य प्राणसूर्य एवमपानचन्द्रीभूयावारोहक्रमेणैव हृदन्तमवरोहति। सूर्य एव प्रभासंक्रमणयुक्त्या चन्द्र इति कालविदः। एवमपानचन्द्रसंचारे नवाङ्गुलस्थितिप्रहरमानेन रात्रिमानं यथा। द्वादशान्तनवाङ्गुले प्रथमो यामः। द्वादशान्तत्र्यङ्गुलात् तालुनि नवाङ्गुलं द्वितीयः प्रहरः। स एवार्धरात्रः। अत्र योगिनो जपाद्यमैहिकसिद्धिदम्। तालुतः कण्ठाधोऽङ्गुलान्तं तृतीयो यामः। ततस्तु हृत्पद्मं यावच्चतुर्थो यामः। अत्रापि त्रुट्यर्धं पूर्ववत् प्रातःसंध्या। ततः सूर्योदय इत्यहोरात्रविभागः। तदित्थमान्तराहोरात्रे बाह्यस्थूलकालापेक्षया काष्ठा एका पञ्चदशनिमेषरूपा। इत्थमाध्यात्मिके त्रिंशदहोरात्ररूपे मासे बाह्ये त्रिंशत्काष्ठारूपा कलैका। एवंविधैर्द्वादशभिर्मासैराभ्यन्तरे वर्षे बाह्ये घटिकः। तदेवमाध्यात्मिके वर्षे सषष्टिस्त्रिशती प्राणापानचाराणां भवति। अनया कलनया बाह्ये षष्टिघटिकात्मकेऽहोरात्रे प्रतिघटिकायां सषष्टिस्त्रिशती प्राणाचाराणामिति गणनया, षट्शताधिकानि एकविंशतिसहस्राणि श्रीदेव्या अजपाया जपः। तथा चात्राध्यात्मिकाहोरात्रबाह्यकालापेक्षया निमेषद्वयात्मिका त्रुटिरेका भवति। तत्र त्रुट्यर्धं दिनं, त्रुट्यर्धं रात्रिः। इत्थं पञ्चदशभिस्त्रुटिभिः पक्षः। त्रिंशद्भिर्मासः, ताभिरेव षड्गुणिताभिरशीत्युत्तरशतैकेनायनमेकम्। तथा द्वितीयमिति। षष्ट्याधिका त्रिशती त्रुटयो वत्सरमेकमिति बाह्यघटिकाविचारः॥

अथ देशक्रमः। अत्र हृत्पद्मात् शान्त यावत् प्राणाचारे मकराद्या राशयः षड्भिः षड्भिः अङ्गुलैर्भवन्ति। अङ्गुलेऽङ्गुले पञ्च पञ्च तिथयः। तत्र पूर्वमर्धं दिनं, अपरमर्धं निशा। एवं त्रिंशता तिथिभिः द्विपक्षो मासः, इत्यादि स्वयमूह्यं, विस्तरभयान्न लिख्यते॥ तथा चात्र —

शतं चैका हृदयस्य नाड्यः तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति।

इति श्रुतौ,

---

१ कठोपनिषद्, २।३।१६।

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि।
सितासिता बभ्रुनीलाः कपिला नीललोहिताः॥
ऊर्ध्वमेका स्थिता तेषां यो भित्त्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥
यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम्।
तेन देवशरीराणि स धामानि प्रपद्यते॥
येनैकरूपाश्चाधस्ताद्रश्मयोऽस्य सितप्रभाः।
इह कर्मोपभोगाय तैः संसरति सोऽवशः॥

इति स्मृतौ च। सुगम एव पूर्वोक्तो ह्यर्थः। एवमेव च—

तेऽर्चिरभिसंभवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ् एति मासान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्।

इति श्रुतौ,

ते धूममभिसंभवन्ति, धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड् दक्षिणैति मासान्, मासेभ्यः संवत्सरमेत्याभिप्राप्नुवन्ति, मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्।

इति श्रुतौ च। तथा—

य एवमेनं विन्दन्ति ये चारण्यकमाश्रिताः।
उपासते द्विजाः सत्यं श्रद्धया परया युताः॥
क्रमान्ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम्॥
अयनं देवलोकं च सवितारं सवैद्युतम्॥
ततस्तान् पुरुषोऽभ्येत्यामानवो ब्रह्मलौकिकान्।
करोति पुनरावृत्तिस्तेषामिह न विद्यते॥
यज्ञेन तपसा दानैर्ये हि स्वर्गजितोऽवराः।
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च॥
पितृलोकं चन्द्रमसं वायुवृष्टिं जलं महीम्।
क्रमात् ते संभवन्तीह पुनरेव व्रजन्ति च॥

---

१ बृहदारण्यक०, ६।२।१५।

२ तत्रैव, ६।२।१६।

इति स्मृतौ च प्रकटोऽयमेवार्थो व्याख्येयः संयमप्रस्तावात् । मुख्येऽर्थे स्खलद्गतिः । प्रयोजनावेक्षया मुख्यार्थस्य बाधे लक्षणाप्रवृत्तेः सर्वतन्त्र[1]प्रसिद्धेः । आभ्यन्तरं सूक्ष्मं कालमेवापेक्ष्यानुसंधातव्यः । यत् तु अत्र स्थूलबाह्यकालापेक्षया लक्षणीयमर्थमुपेक्ष्याप्रस्तुतो देवपितृयाणत्वेन वाच्योऽर्थो व्याख्यातः, तथा च तैरेव[2] रश्मिभिरूर्ध्व आक्रम्यते इति मूर्धन्यनाड्योत्क्रामतो रश्मिद्वारा ब्रह्मलोकगमनं श्रुतम्, तत्र रश्म्यभावाद्रात्रौ प्रेतो यदि तैर्विनाप्यूर्ध्वमाक्रामेत, रश्मिभिरेवेत्यवधारणं न स्यात्, तस्य दिवाप्रेतविषयत्वापातात् । यदि रात्रिप्रेतो रश्म्यभावापराधान्नोर्ध्व आक्रमेत, निष्फला विद्या स्यात् । यद्यहरागमं प्रतीक्षेत तदा शरीरस्य ततः पूर्वं दाहादिना नाशे नाडीरश्मिसंबन्धाभावात् फलानुपपत्तिः । स यावत् क्षिपेन्मनस्तावदादित्यं गच्छतीति त्वरावचनानुपपत्तिश्चेति । दक्षिणायने प्रेतो विद्वान् नोत्तरायणदेवता प्राप्नुयात् तन्मासानामभावात् । उत्तरायणमरणप्राशस्त्या प्रसिद्धेश्च भीष्मस्य तत्प्रतीक्षादर्शनाच्चेत्यादिचोद्यपरिहारे कृतश्च प्रयासो महात्मभिः[3] । तत्र—

विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ।

इ[4]तीदमेव समाधानं प्रमाणम् ॥ २५ ॥

एतदुपसंहरति—

**शुक्लकृ[5]ष्णगती ह्येते जगतः शाश्वते मते ।**
**अनयोर्यात्यनावृत्तिमेकयावर्ततेऽन्ययाᳵ[6] ॥ २६ ॥**

शुक्ला प्राणगतिः, कृष्णा अपानगतिः, अनावृत्तिर्मोक्षः, आवृत्तिर्भोगः ॥ २६ ॥

---

१ द्रष्टव्यः काव्यप्रकाशः, उ० २, का० ११ ।

२ छान्दोग्य, ८ । ६ । ५ ।

३ द्रष्टव्यं ब्रह्मसूत्रम् ४ । २ । १९, तदुपरि शाङ्करभाष्यं च ।

४ शिवमहिम्नः स्तोत्रम्, श्लो० १८ ।

५ 'शुक्लकृष्णे गती' इति प्रचलितपाठः ।

६ 'एकया यात्यनावृत्तिमन्ययावर्तते पुनः' इति उत्तरार्धस्य प्रचलितपाठः ।

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

एते पूर्वोक्तयुक्त्या आभ्यन्तरेण क्रमेण योगाभ्यासस्वीकृते उत्तर-
दक्षिणे[1]........न्यान् जानन् । कश्चन योगी न मुह्यति । लब्धभूमिः
३ स नैवाधः पततीत्यर्थः । तस्मादर्जुन सर्वेषु कालेषु, सर्वे काला ये
बाह्याः आभ्यन्तराश्च तेषु तेषु, योगयुक्तो भवेति । सर्वानुग्राहकतया
मध्ये आभ्यन्तरकालकृतमुत्क्रान्तिभेदमभिधाय प्रकृतमेव बाह्यकाल-
६ विषयं प्रमेयमुपसंहृत्यमित्यभियुक्ताः ॥ २७ ॥

अत्र फलातिशयदर्शनेन श्रद्धां जनयति--

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत् पुण्यफलं प्रदिष्टम् ।
अत्येति तत् सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

एतद्विदित्वा तत् सर्वमत्येति, अभिभवति । सर्वेषां शुभाशुभानुकर्मणां
३ तत्फलानां वा भगवत्स्मरणेनैव परिक्षयात् । तत्परिक्षये चासौ
निरायासमेव विन्दति परमानन्दमिति शुभम् ॥ २८ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
अष्टमोऽध्यायः ॥ ८ ॥

---



१ अत्र विन्दुमालिकास्थाने त्रिचतुराक्षरपरिमितो ग्रन्थपातः ।

# ॥ नवमोऽध्यायः ॥

श्रीगुरुभ्यो नमः ॥ एवं प्रकृतिपुरुषयोः संयोगवियोगकलनस्य लवादिप्रलयान्तस्य सर्वकार्यनिमित्तकारणस्य कालस्य स्वरूपं लक्षयित्वा कालपुरुषप्रकृतीनामधिष्ठानस्य स्वातन्त्र्येण सर्वजगतां कर्तुः सर्वकर्मफलदस्य सर्वान्तर्यामिणः परमेश्वरस्यैव परापरत्वसाधारण्येन स्वरूपं लिलक्षयिषुस्तावदभ्यन्तरसंयमक्रमेण ब्रह्मप्राप्तौ निरन्तरं तपःक्लेशसहवपुषामनन्यव्यापाराणां चरमदेहोत्क्रमणं तावत् प्रतीक्षमाणानां मुनीनामेवाधिकारः, न तु सुकुमारवपुषां प्रजापालनादिव्याप्रतानां भवादृशां, इत्यर्जुनस्य प्रेम्णा सुखसाध्यं सद्यो ब्रह्मप्राप्तावुपायं परमेश्वरभजनं ज्ञानकर्मसमुच्चयानुष्ठानपर्यायं बहुशः प्रोक्तमपि पुनर्हृदये संनिवेशयितुम्—

श्रीभगवानुवाच ।

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

तुशब्दः संयमवैलक्षण्याय । अशुभात्, संसारात् । अनसूयवे, श्रद्धावते ॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

राज्ञामुपयुक्ता विद्या मोक्षसाधनम् । अत्युत्तमत्वात्, विद्यानां राजा वा । राजभिर्गुह्यं गोप्यं, षाड्गुण्यमन्त्रवद्रहस्यम् । उत्तमं पवित्रं, सर्वदोषापहं, न त्वन्यपवित्रवस्तुवत् किंचिन्मात्रदोषघ्नम् । प्रत्यक्षेऽस्मिन्नेवजन्मन्यवगमः सिद्धिर्यस्य, न तु कालान्तरात् । धर्म्यं, धर्मशास्त्रोदितम् । सर्वेषु वर्णाश्रमेषु ज्ञानकर्मसमुच्चयेन विहितम् । कर्तुं सुसुखं, न त्वाभ्यन्तरसंयमवत् कृच्छ्रसाध्यम् । अव्ययम्, अव्ययस्य कैवल्यस्य कारणत्वात् ॥ २ ॥

एतच्च मद्भक्तैः श्रद्धया प्राप्यं न त्वन्यैरित्याह—

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

धर्मस्य ज्ञानस्य । मृत्युर्मरणं, संसारः संसरणं जन्म, तयोर्वर्त्मनि विनिवर्तन्ते पुनः पुनर्भ्रमन्ति ॥ ३ ॥

ज्ञानमेवाह—

**मया ततमिदं कृत्स्नं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**

अव्यक्तमूर्तिना, वाङ्मनसागोचरेण परब्रह्मस्वरूपेण, मया इदं, दृश्यं स्थूलसूक्ष्मं जगत् विश्वं, ततं, सृष्टिसमये विस्तारितम् । यथा आपणिकेन रात्रौ संहृतं वस्तु प्रभाते पुनर्विस्तीर्यते, तथा सर्वाणि भूतानि मत्सृष्टान्यन्तेऽपि मत्संस्थानि भवन्ति । च पुनरहं सर्वकारणं तेषु नास्मि बहिरन्तश्च व्याप्त्या । अथ चाव्यक्तमूर्तिना परप्रकृति-स्वरूपेण जीवात्मना मया अहंशब्दवाच्येन । गच्छति परिणामं जगदिति व्युत्पत्त्या भूतेन्द्रियादिसंघातरूपं शरीरं ततं व्याप्तम् । मत्स्थानि मदधिष्ठितान्येव सर्वभूतानि, शरीरारम्भकाणि पृथिव्या-दीनि । न चाहं तेष्ववस्थितः । यथा भूतानि जीवाधीनप्रवृत्तीनि, तथा जीवस्तदधीनप्रवृत्तिर्नास्ति ॥ ४ ॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

ऐश्वरं योगमैश्वर्यसंबन्धं सर्वशक्तिमत्त्वं, मे परब्रह्मस्वरूपस्य, विचारय । समनन्तरोक्त्या मत्स्थानीत्युक्तान्यपि न च मय्येव तिष्ठन्ति, मत्सायुज्यं विना पुनः पुनरुत्पद्यन्ते विलीयन्ते चेत्यर्थः । एतदेव स्पष्टयति । मम परब्रह्मण आत्मा परमात्मसंज्ञः भूतभावनः, भूतानि महाप्रलये स्वसूक्ष्मकारणात्मनाऽव्याकृत्या पृथक् पृथगवस्थि-तान्यपि भावयति । सर्गादौ पञ्चीकरणक्रमेण संयोजयति, मिश्रयती-

---

१ 'सर्वे' इति प्रचलितपाठः, गोण्डलकलकत्तामातृकयोर्विद्यते ।

दृशः। भूवोऽवकल्कने इति धातोः, सक्तून् भावयतीतिवन्मिश्रणार्थ-[1]स्येदं रूपम्। भूतभृत्, भूतानि बिभर्ति धारयति पोषयति च। न च भूतस्थः। निर्लेपस्य निर्विकारस्य तेभ्यः पृथगेव स्थितेः। तथा मे जीवात्मरूपस्याप्यैश्वरं योगमीश्वरस्वभावं पश्य। तन्तुपटन्यायेन[2] सर्व-भूतानि मयि कारणे स्थितानि, यतो मम परमेश्वरस्य संबन्धी आत्मा परप्रकृतिरूपो जीवः भूतभावनः। इदंशरीरारम्भकाणां संयोजकः, एतच्छरीरारम्भकाणि भूतानि धारयति, पोषयतीति भूतभृत्। न च भूतस्थः, केवलमेतच्छरीरारम्भकेषु भूतेष्वेव न स्थितः, किं तु कर्म-भोगार्थं स्वप्नावस्थायां योगावस्थायां च व्यापकत्वाद्बहिः पराण्यपि शरीराणि विशति, इत्यर्थः ॥ ५ ॥

अत्र सर्वत्र दृष्टान्तमाह—

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

यथा वायुः सर्वत्रगः, अत एव महान् व्यापको, नित्यमाकाशस्थित एव भवति। परममहत्परिमाणे आकाश एव लीयते। तत एव चोदेति। तत्स्थित एव च प्रवर्तते। न चाकाशो वायौ तिष्ठति। तथा सर्वाणि भूतानि मत्त एव प्रथमसमुदितानि। प्रलये मय्येव स्थितानि। पुनः सर्गे मत्प्रेरितान्येव प्रवर्तन्ते। न चाहं तेषु भूतेष्ववस्थित इति दृष्टान्ततात्पर्यम् ॥ ६ ॥

एतदेव निगमयति—

एवं सर्वेषु भूतेषु[3] चराम्यनभिलक्षितः।
भूतप्रकृतिमास्थाय सहैव च विनैव च ॥ ७ ॥

---

१ पाणिनीयधातुपाठ, १०।२०७।

२ तन्तुपटन्यायः 'पटवच्च' इति ब्रह्मसूत्रशारीरकभाष्ये (२।१।१९) विवृतस्ततो द्रष्टव्यः।

३ अयं श्लोकः प्रचलितपाठे न पठ्यते। 'हि सर्वभूतेषु' तथा 'सह चैव' इति काश्मीरपाठे मातृकान्तरे पाठभेदौ।

सहैवेत्यन्तर्यामितया, विनैवेति कैवल्येन । इति वाग्वाकाशदृष्टान्तो दर्शित एव । जीवात्मपक्षे तु सहैवेति जागरावस्थाया, विनैवेति स्वप्नावस्थादिषु ॥ ७ ॥

एतदेव प्रतिपादति—

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामकीम्[1] ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ८ ॥

विसृजामि, विविधं स्वस्वकर्मवैचित्र्यान्नानाप्रकारेण सृजामि ॥ ८ ॥

विविधं सर्गमेवाह—

प्रकृतिं स्वामवष्टभ्य[2] विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ९ ॥

अहं परमेश्वरः, इमं दृश्यमानं कृत्स्नं सचराचरं भूतानां ग्रामं, समूहं चतुर्दशविधं, प्रकृतेर्वशादवशम् । प्रकृतेः सात्त्विक्या राजस्यास्तामस्या वा परतन्त्रम् । स्वां प्रकृतिं, यस्य या स्वकीया प्रकृतिस्ताम्, अवष्टभ्यावलम्ब्य, पुनः पुनः अहं विसृजामि । निजनिजकर्माशयानुरूपेण वैचित्र्येण संयोजयामीत्यर्थः ॥ मनुः[3]—

तापसा यतयो विप्रा ये च वैमानिका गणाः ।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥
यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः ।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥
ब्रह्मा विश्वसृजो धर्मः महानव्यक्तमेव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥
असत्कार्यरतो धीर आरम्भी विषयी च यः ।
स राजसो मनुष्येषु पुनर्जन्माधिगच्छति ॥

---

१ 'मामिकाम्' इति प्रचलितपाठः ।
२ 'स्वामधिष्ठाय' इति कलकत्तामातृकायां पाठः ।
३ मनुस्मृति, १२ । ४८–५० । चतुर्थश्लोकस्तु याज्ञवल्क्यस्मृतौ ३ । १३८ ।

मनुः—

झल्ला मल्ला नटाश्चैव पुरुषाश्च कुवृत्तयः ।
द्यूतपानप्रसक्ताश्च प्रथमा राजसी गतिः ॥
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ।
दानयुद्धप्रधानाश्च द्वितीया राजसी गतिः ॥
गन्धर्वा गुह्यकाश्चैव विविधा भूचराश्च ये ।
तथैवाप्सरसः सर्वा राजसेषूत्तमा गतिः ॥

अथ तामसलक्षणमाह—

निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।
प्रमादवान् भिन्नवृत्तो भवेत्तिर्यक्षु तामसः ॥

निद्रालुः निद्राशीलः । क्रूरकृत् परदुःखकारी । लुब्धकनास्तिकौ प्रसिद्धौ । याचकः, स हि द्रव्ये भिक्षणशीलः । प्रमादः कार्यानादरः । भिन्नवृत्तो दुराचारः । स तामसः । स तिर्यक्षु जायते ॥ मनुः—

स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सरीसृपाः ।
पशवश्च सृगालाश्च जघन्या तामसी गतिः ॥
हस्तिनश्च तुरंगाश्च शूद्रा म्लेच्छा विगर्हिताः ।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥
चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ।
रक्षांसि च पिशाचाश्च तामसेषूत्तमा गतिः ॥

अत्र च कर्मतारतम्येन फलतारतम्यम् ॥ ९ ॥

न मां कर्माणि लिम्पतीत्युद्दिष्टं लक्षयति—

**न च मां तानि कर्माणि निबध्नन्ति धनंजय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ १० ॥**

तानि कर्माणि उत्तममध्यमाधमादिवैचित्र्येण विषमाण्यपि कृतानि ।

---

१ मनुस्मृति, १२।४५–४७। तामसलक्षणात्मकः चतुर्थः श्लोकस्तु याज्ञवल्क्यस्मृतौ ३।१३९।

२ मनुस्मृति, १२।४२–४४। एते सर्वे एव श्लोकाः, अन्ये च केचन चतुर्दशाध्यायटीकायामप्युद्धृताः।

मामेतत्कर्तारं परमेश्वरं न निबध्नन्ति, एतद्वैषम्यकरणदूषितं न संपादयन्ति । अत्र हेतुगर्भं विशेषणमाह । उदासीनवदित्यादि । यथान्योऽपि यःकश्चन कर्म कुर्वाणोऽपि कर्मफलेऽनासक्तः, उदासीनस्तिष्ठति । तं कर्माणि न निबध्नन्ति, न बन्धकानि भवन्ति, तथेत्यर्थः । अपि चायमत्र वाक्यार्थः । जीवा ह्युक्तवक्ष्यमाणनयेन स्वस्वकर्मभोगार्थमुत्पद्यन्ते, विलीयन्ते च । अहं तु परमेश्वरः तेषां कर्मविपाकं विदित्वा तदनुरूपैर्जात्यायुर्भोगैः संयोजनाय तत्तत्सर्गकर्तेत्यर्थः ॥ १० ॥

करणप्रकारमेवाह—

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ ११ ॥

मयाध्यक्षेण सर्गादिकरणाधिकृतेन स्वतन्त्रेण नियन्त्रा प्रेरिता प्रकृतिः सप्तमाध्यायोक्तियुक्त्या परात्मिका पुरुषप्रधानसंज्ञा प्रवर्तिता । स्वकीया शक्तिः सचराचरं विश्वं सूयते जनयति । मदधिष्ठानं विना परतन्त्रायाः प्रकृतेर्नाधिष्ठातृत्वम् । एतेन निजनिजकर्मभोगार्थं मम सर्वज्ञस्य प्रेरणया हेतुना जगद्विपरिवर्तते, नानारूपतां भजते । संसारचक्रे च परिभ्रमति ॥ ११ ॥

एवं परापरात्मत्वेन साधारणानात्मगुणान् लक्षयित्वा प्रकृतिविकारोपाधिभिन्ननानात्वं प्रतिपन्नस्यापरजीवस्यैव गुणान् लक्षयितुमुपक्रममाणः, अव्यक्तं व्यक्तिमापन्नमिति सप्तमे (श्लो० २४) यदुक्तं तदेवार्जुनस्य विश्वासदार्ढ्यार्थं पुनराह—

अवजानन्ति मां मूढा मानुषीं तनुमास्थितम् ।[1]
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥[2]

मूढा, अहंकारात्मना तमसा मोहिताः समावृतज्ञानाः, जीवाः ममाव्ययं जन्मादिविकाररहितम्, अनुत्तमं सर्वतत्त्वोर्ध्ववर्तिनं, परं भावमुक्त-

---

१ '॰माश्रितम्' इति प्रचलितः पाठः ।

२ 'मम भूतमहेश्वरम्' इति चतुर्थचरणस्य प्रचलितः पाठः ।

लक्षणं परमैश्वर्यस्वभावं, अजानन्तः मां मानुषीं तनुमास्थितमवजानन्ति ॥ १२ ॥

मूढत्वमेव लक्षयति—

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १३ ॥**

मोहिनीं, तमसः प्राचुर्येण ज्ञानमाच्छादयन्तीम्, आसुरीं राक्षसीं च प्रकृतिमाश्रितानां जीवानां विचेतसां, विगततत्त्वज्ञानां मां परमेश्वरमभजताम् । यक्ष्ये दास्यामि (१६।१५) इत्यादिवक्ष्यमाणाशा, स्पृहापि मोघा विरुद्धफलैव । तेषामित्थं निरयपतनोक्तेः, तथैव कर्म क्रियमाणं मोघमेव । तेषां ज्ञानमपि वक्ष्यमाणं विरुद्धमेव ॥ १३ ॥

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमास्थिताः ।**
**भजन्तेऽनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १४ ॥**

महान् रजस्तमसी अभिभूय सत्त्वाविर्भावादुद्रिक्त आत्मा येषां ते ॥ १४ ॥

श्रवणादिभजनप्रकारमेवाह—

**सततं कीर्तयन्तश्च[1] यतन्तश्च दृढव्रताः[2] ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १५ ॥**

कीर्तयन्तः, श्रुतिभ्यः स्वयं श्रुत्वा मां यथोक्तगुणं परानपि श्रावयन्तः । यतन्तः, मननार्थं शास्त्रोपपत्तिं अभ्यस्यन्तः । दृढव्रताः, निदिध्यासनपराः । एवं श्रवणादिप्रकारया भक्त्या नित्यं युक्ता ज्ञानसमुच्चितं कर्मानुतिष्ठन्तः, अत एव नमस्यन्तः, कायवाङ्मनोभिर्भेदेकशरणाः, उपासते ॥ १५ ॥

सर्वत्र सर्वथा सर्वात्मकोऽहमेवोपास्य इति उपासनापर्यायं ज्ञानकर्मणोः समुच्चयानुष्ठानं लक्षयति—

---

१ 'कीर्तयन्तो मां' इति प्रचलितपाठः ।
२ 'यतव्रताः' इत्यभिनवगुप्तपाठः ।

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १६॥

अन्येऽपि केचनैकत्वेन ज्ञानयज्ञेन, ऐक्येन हेतुना यज्ज्ञानं तत्पूर्वकेण
यज्ञेन, यष्टृ–यजनीय–यज्ञोपकरणानां त्रयाणामपि ब्रह्मार्पणदृशा
३ ब्रह्मैक्यज्ञानपूर्वेण यज्ञेन यजन्तो मामुपासते। अन्ये बहुधा नानाप्रकार-
६ कदेशकालाकारादिभेदवैचित्र्यज्ञानपूर्वकेण यज्ञेन यजन्तो मामुपासते।
तदेवं सर्वे सर्वत्र सर्वैः प्रकारैर्मामेव सर्वात्मानं परमेश्वरमुपासते।
नास्ति कश्चिन्मदन्यः सेव्य इत्यत्रोपपत्तये विशेषणमाह, सर्वतो-
९ मुखम्। येन यत्र यथोपास्यते, तस्य तत्र तथा फलदानार्थं संमुख-
मित्यर्थः। यथा सर्वासु दिक्षु सर्वेषां सर्वार्थप्रकाशनाय सूर्यः
संमुखस्तथाहमित्यर्थः। तथा च परमेश्वरस्यैक्यात्मतामेवाह। अथ
१२ चैको वासुदेव एव सर्वदेवात्मा सर्वत्र सदा पूज्य इत्यैक्यज्ञान-
पूर्वकेण यज्ञेन यजन्तो ये मामुपासते। तथा देवाः पितरो मनुष्याः
यथाकालं यथादेशं पूज्या इत्यन्ये पृथक्त्वज्ञानपूर्वकेण यज्ञेन। अपरे
१५ ब्रह्मावर्तादिदेशे एकादश्यादिकाले, चतुर्भुजाद्याकारे, तुलसीचन्द-
नादियज्ञोपकरणे, भेदेन बहुप्रकारकज्ञानपूर्वकेण यज्ञेन यजन्तो
मामुपासते। सर्वत्र सर्वेषामहमेवोपास्यः फलदश्चेत्यर्थः। तथा च
१८ स्तुतम्––त्रयी सांख्यं योग इत्यत्र[१] ॥ १६॥

एतदैक्यात्मज्ञानमेवाह––

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १७॥

क्रतुयज्ञयोः श्रौतस्मार्तत्वेन भेदः। औषधमोषधिः, फलपाकान्तेति
३ यवतिलादि हुतम्, हवनक्रिया चाहमेव ॥ १७॥

पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥ १८॥

बहुशोऽवगतोऽर्थः ॥ १८॥

१ शिवमहिम्नः स्तोत्रम्, श्लो० ७।

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १९ ॥

गम्यतेऽनया परं तत्त्वं गतिरुपायः । भर्ता पोषकः । प्रभुर्यथेष्टाज्ञापकः । साक्षी कृतस्य पुण्यापुण्यस्य कर्मणः साक्षात् द्रष्टा । निवास आस्पदम् । शरणमुपद्रवशमन आश्रयः । सुहृदुपकारानपेक्ष्या उपकर्ता । निधानं, निधीयते निक्षिप्यते श्रेयोऽर्थं सर्वकर्म अस्मिन्निति निधानम् ॥ १९ ॥

कालस्वरूपेणैक्यात्मतामाह ॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ २० ॥

अत्रैष पूर्वार्धे वाक्यार्थः । मीनमेषवृषमिथुनचतुर्मासे रविर्भौमान् रसानाददाति । कर्कटादिचतुर्मासे तानेवोत्सृजति । वृश्चिकादिचतुर्मासे भूमावेव तान् धारयतीति संवत्सरात्मकस्य कालस्य चातुर्मास्यभेदेन यत् कार्यं तत्राहमैक्यात्म्येन एक एवाहं कर्तेत्यर्थः । विवृतं चैतद्विष्णुपुराणे—

विवस्वानष्टभिर्मासैरादायापो रसात्मिकाः ।
वर्षत्यन्नं ततस्तस्मादन्नमप्यखिलं जगत् ॥

इति । अमृतं सायुज्ये योऽक्षयः कालः, सोऽहमेव । मृत्युः प्रलयरूपोऽप्यहमेव । सदिति वर्तमानकालत्वं, असदित्यतीतानागतकालता ॥ २० ॥

एवं सर्वत्र सर्वदा ब्रह्मैक्यदृष्ट्या क्रियमाणं कर्मानन्तफलदमित्युक्तम् । इदानीं भेदज्ञानेन क्रियमाणं कर्म परिमितफलमित्युपदिशति——

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्तिं ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २१ ॥

त्रैविद्याः त्रैवर्णिकाः वेदत्रयविदो याज्ञिकाः । पूतपापाः श्रुतिविहिता-

---

१ 'प्रार्थयन्ते' इति प्रचलितपाठोऽन्यत्र सर्वत्र ।

निषेकादिसंस्कारसंपत्त्या विगतपापाः । सोमपा अर्थान्नित्यनैमित्तिककर्मानुष्ठायिनः । संपृथक्त्वज्ञानात् शक्रादिमूर्तिं यज्ञैर्द्रव्यदेवतादिभेदभिन्नैर्बहुभिर्ज्योतिष्टोमादिभिरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते तैस्तैर्यज्ञविशेषैस्तांस्तान् देवविशेषान् यजन्तो मामेकं विश्वतोमुखमजानन्तोऽपि मामेव यजन्ते ॥ २१ ॥

परं त्वज्ञानेन प्रार्थनायां विशेषमाह—

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २२ ॥

एवमनेन प्रकारेण भेदाज्ञानात् फलकामनया त्रयीधर्ममनुप्रपन्नाः गतागतं लभन्ते इत्यर्थः ॥ २२ ॥

ऐक्यात्म्यज्ञाने कर्मणः फलं लक्षयति—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं ददाम्यहम्[1] ॥ २३ ॥

न विद्यतेऽन्यत् मद्व्यतिरिक्तं वस्त्वन्तरं येषां ते । चिन्तयन्तः, मद्रूपतया सर्वमिदं जगद्विमृशन्तः, मां ये जनाः पर्युपासते । तेषां नित्ये परमेश्वरे तत्प्राप्तिरूपे फले चाभियुक्तानां सततोद्योगवतां योगक्षेमं, अलब्धायाः ब्रह्मप्राप्तेः लाभो योगः, क्षेमं ब्रह्मप्राप्तेरपरिलोपलक्षणं रक्षणम्, इति योगभ्रष्टत्वशङ्कानिवारणार्थम् ॥ २३ ॥

ननु विश्वतोमुखलक्षणावेक्षणाश्चिन्तयतामचिन्तयतां चानन्यत्वं सममेवेति कथमेषामेव योगक्षेमावहत्वं तवेत्याशङ्क्याह—

येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २४ ॥

विधिर्हि यष्टव्ययजनीययागोपकरणानां ब्रह्मार्पणयुक्त्यै काम्यज्ञानपूर्वं

---

१ 'वहाम्यहम्' इति प्रचलितपाठः! कलकत्तामातृका अत्र मूलानुसारिणी ।

कर्मानुष्ठानम् । ज्ञानं विना केवलं कर्म कुर्वतां स नास्तीत्यतो ह्यविधिपूर्वकयजनादेव तेषामन्तवत् फलमित्यर्थः ॥ २४ ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २५ ॥

सर्वेषां तां तां देवतामुद्दिश्य क्रियमाणानां यज्ञानां श्रौतानां स्मार्तानां चाहमेव भोक्ता, सर्वान्तर्यामितया भोक्ता स्वीकर्ता प्रभुः फलदाता चाहमेव । तु पुनः, ते देवतान्तरयाजिनो मां तत्त्वेनैक्यात्म्येन नाभिजानन्ति । अतो हेतोः च्यवन्ति, ब्रह्मत्वमनासाद्य गतागतं लभन्ते ॥ २५ ॥

एतदेव निगमयति—

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २६ ॥

देवार्थं व्रतमर्थाद्यजनं येषां ते देवव्रताः । भूतेज्याः भूतानां चतुर्दशविधानां भूतगणानामर्थे इज्या येषां ते, बलिदानेन भूतयज्ञं कुर्वन्तः ॥ २६ ॥

तत्तन्नानाविधद्रव्यसंभारसाधनसाध्याद्देवादियजनान्निजयाजनैर्विशेषमाह—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २७ ॥

प्रयतो ब्रह्मैक्यभावनायां समाहित आत्मा, अन्तःकरणं यस्य तस्य, भक्त्या दत्तं तत् पत्रादिकमहमश्नामि । अहं हि भक्तिमता भक्त्या दत्तेनानायासलभ्येन पत्रमात्रेणापि तृप्तो भवामि । न तु देवतान्तरवद्बहुवित्तव्ययायाससाध्येन यज्ञविधिनेत्यर्थः ॥ २७ ॥

तदेवं ममैक्यात्मज्ञानेन कृतं कर्मानन्तफलं ज्ञात्वा—

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ २८ ॥

सुगमोऽर्थः ॥ २८ ॥

अस्य फलमाह—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपेष्यसि ॥ २९ ॥

एवं मदर्पणयुक्त्या कर्म कुर्वाणः । संन्यासः, कृतानां कर्मणां मयि
३ समर्पणं निक्षेपणं, योगः ऐक्यात्मसमाधिः, ताभ्यां युक्त आत्मा यस्य ।
एवं विमुक्तः सर्वेभ्यो बन्धनेभ्यो विमुक्तः, मामुपेष्यसि मत्सायुज्यं
प्राप्स्यसीत्यर्थः ॥ २९ ॥

य एवं त्वां भजन्ते त एव मोक्ष्यन्ति, नेतरे इति स्वस्य रागादिमत्त्वमाशङ्क्याह—

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ३० ॥

३ उक्तयुक्त्या सर्वेषु भूतेषु चतुर्दशविधेष्वन्तर्यामितया समः सम-
व्याप्तिः । अत एव सर्वात्मतया न मे रागद्वेषौ । तु पुनर्ये मां भक्त्या
भजन्ति ते मयि वर्तन्ते, अहमपि तेषु वर्ते । ताननुग्रहीतुं मम स्वभा-
६ वोऽयम् । यथाग्निः भजत एव शीतमपनयति, नेतरस्यातो ये भजन्ति
तेष्वहं वर्ते । नात्र रागद्वेषौ कारणम्, किं तु प्राणिनां कर्मैव । कर्मा-
नुरूपफलदानेनाग्निवदनुगृह्णामि इत्यर्थः ॥ ३० ॥

तदेवं श्रुत्यधिकारिणां यज्ञपूर्वको ब्रह्मप्राप्तये भजनप्रकारो दर्शितः ।
येषां तु—

३ अवैद्यत्वादनग्नित्वान्नाधिकारोऽस्य कर्मसु ।
श्रौतेष्ववैद्यताप्यस्य वेदाध्ययनवर्जनात् ॥
यः स्वाध्यायमधीयेत कुर्यात् कर्म स एव तत् ।
६ अवैद्यत्वादतः शूद्रो कर्मभ्यः पर्युदास्यते ॥

इति नयात् यज्ञेषु नाधिकारः । तथा—

अपवर्गेऽधिकारस्तु स्त्रीशूद्राणां भवेद्यदि ।
९ जात्युत्कर्षो द्विजातीनामनर्थाय ततो भवेत् ॥

इति विचारणया च नापि ब्रह्मप्राप्तावधिकारः, तेषामप्यनुग्रहार्थम्—

श्रौतानधिकृतानां तु यावद्विहितसेवनात् ।
निषिद्धवर्जनाच्चापि कथा श्रवणतो विभोः ॥
हीनाहीनाः शुभं जन्म पारंपर्येण यद्भवेत् ।
अनुग्रहः स एषोऽस्य पुंस ईशकृतो भवेत् ॥

इति नयात् ।

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ॥

इत्यादिस्मरणेन च भगवद्गुणश्रवणमात्रेण भक्तिप्रकारेण सद्गतिं दर्शयति—

**अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३१ ॥**

सुष्ठु दुः, उत्तमजात्यपेक्षया दूषितो, निन्दितः, आचारः हिंसादिघोरं कर्म यस्य सः, घोरकर्मानुष्ठाता हीनजातिरपि । अनन्यभाक् न अन्यत् उक्तादितरद्भजते इति । यदेवास्य कर्मादिष्टं तदेवानुतिष्ठन् । मां भजते, पुराणेतिहासादिश्रवणाधिगतयाथात्म्यं परमेश्वरमाराध्यत्वेन जानाति । ब्राह्मणादिषु परमेश्वरमूर्तिषु परिचरति च । स साधुरेव सदाचार एव मन्तव्यः । हि यस्मात् स हीनजातिरप्येवंविधकर्मा सम्यग्व्यवसितः । ज्ञानाधिगमयोग्यदेहप्राप्तये बद्धोत्साहः संपन्नः । दृष्टान्तश्चात्र भारते धर्मव्याधः । एवमर्जुनस्य हिंसात्मकेऽपि युद्धे प्रवृत्तिस्तव धर्म इत्यादिष्टम् ॥ ३१ ॥

अस्य ज्ञानाधिकाराय देहप्राप्तिमेव—

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं नियच्छति[1] ।**
**कौन्तेय प्रतिजानीहि[2] न मद्भक्तः[3] प्रणश्यति ॥ ३२ ॥**

---

१ 'निगच्छति' इति प्रचलितपाठः । गोण्डलमातृकायां दृश्यते ।

२ 'प्रतिजानेऽहं' इति रामकव्यभिनवगुप्तयोः पाठः ।

३ 'मे भक्तः' इति पाठो गोण्डलकलकत्तामातृकयोः । रामकविनापि स एव स्वीकृतः ।

हीनजातिरप्येवं मां भजन् क्षिप्रं तद्देहपातोत्तरकालमेव धर्मात्मा भवति । परमेश्वरैक्यात्म्यज्ञानयोग्यशरीरः ब्राह्मणत्वादिजातिमान् भवतीत्यर्थः । तथाभूतश्च शश्वन्नित्यं शान्तिमपवर्गाख्यां नियच्छति, नियतां करोति । कौन्तेय प्रतिजानीहि, निश्चितं जानीहि । मद्भक्तो न प्रणश्यति । अत्र भगवद्भक्त्या दासीपुत्रस्यापि नारदस्य ब्रह्मपुत्रत्वं निदर्शनम् ॥ ३२ ॥

एतदुपसंहरति—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३३॥

हि निश्चये । ते पापयोनयोऽपि मां व्यपाश्रित्य परां गतिं यान्तीत्यन्वयः ॥ ३३ ॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३४ ॥

किं पुनः पुण्याः, श्रौतकर्मज्ञानाधिकारादुत्कृष्टजातयः भक्ताः, उक्तप्रकारेण यज्ञेन ब्रह्माप्तये श्रद्धावन्तः ब्राह्मणाः, परां गतिं कथं न यान्ति । तथा पुण्या भक्ताश्च राजर्षयः राजानः, प्रजां पालयन्तश्च ते ऋषयः ज्ञानैकनिष्ठाः, कथं न परां गतिं यान्ति । एवमीश्वरभजनमेव सिद्धान्तयति—अनित्यं, क्षणिकं असुखं विचार्यमाणदुःखैकरूपम्, इमं लोकं, कर्मभूमिम्, प्राप्य मां भजस्व । नित्यत्वसुखित्वप्राप्तये ज्ञानकर्मसमुच्चयानुष्ठानेन मामाराधयेत्यर्थः ॥ ३४ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३५ ॥

उत्तरोत्तरमियं कारणमाला । शेषं बहुशो व्याख्यातपूर्वम् ॥ ३५ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ नवमोऽध्यायः समाप्तः ॥ ९ ॥

## ॥ दशमोऽध्यायः ॥

ॐ श्रीगुरुभ्यो नमः ॥ अथेश्वरस्य पुरुषत्वेन नानात्वं विभूतिभेदैर्दर्शयन्—

श्रीभगवानुवाच ।

भूय एव महाबाहो शृणु मे परमं वचः ।
यत् तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

यथोपदिश्यसे तथा रजस्तमसोः क्षयात् सत्त्वोद्रेकेण प्रीतिमेव भजसे इत्यर्थः । हितकाम्यया यत् तेऽहं वक्ष्यामि तत् परमं प्रत्यक्षलक्ष्यतयोत्कृष्टं वचः भूय एव शृणु ॥ १ ॥

उत्कर्षमेवाह—

न मे विदुः सुरगणाः प्रभवं च महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

सुरगणाः ब्रह्मादयो, महर्षयो भृग्वाद्याः । प्रभवमुत्पत्तिकारणमुत्पत्तिमेव च विभूतीनां प्रकृष्टं भवनमाविर्भावं वा, न विदुः । नास्ति जन्म मे, सर्वकारणमीश्वरोऽहम् । मयैव सृष्टाः सर्वे ब्रह्मादयो मत्स्वरूपं कथं विदुः ॥ २ ॥

ईश्वरस्वरूपज्ञाने फलमाह—

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

अजं नित्यत्वाज्जन्मरहितम् । अनादिं मत्तः परतरं कोऽपि नास्तीत्यर्थः । लोकमहेश्वरम्, लोच्यन्त इति लोका दृश्या ब्रह्मादयः, तेषां महान्तमीश्वरं नियन्तारं यो वेत्ति, स मर्त्येषु सर्वेषूत्पन्नविनश्वरेषु मध्ये असंमूढः मिथ्याज्ञानहीनः, सर्वैः नानायोनिजन्मप्रदैः पापैः दुष्कर्मभिः प्रमुच्यते, ब्रह्मैक्यं याति ॥ ३ ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥

बुद्धिः सूक्ष्मार्थबोधनम् । ज्ञायतेऽनेनेति ज्ञानं शास्त्रं, असंमोहः, संमोहकारणेषूपस्थितेष्वनाकुलत्वम् ॥ ४ ॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**

तुष्टिर्यथालाभं संतोषः, एते बुद्ध्यादयो भावाः पृथग्विधाः स्वकर्मवैचित्र्येण नानाप्रकाराः सन्त एवेश्वरादुत्पद्यन्ते । यद्यहमीश्वरस्तत्तत्कर्माधिष्ठाता न स्याम्, तर्हि प्राणिनां तस्य कर्मणः क्षणिकस्य फलं विचित्रं बुद्ध्यादिकं कालान्तरे क उद्भावयेत् । तस्मात् सर्वज्ञः सर्वशक्तिरीश्वरः कर्मणो विपाकं विदित्वा तस्य तस्य शुभाशुभस्य बुद्ध्यादिकस्य च कारणमहमस्मीत्यर्थः ॥ ५ ॥

अहमादिरिति ( श्लो. २ ) यदुक्तं तत् प्रपञ्चयति—

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

मद्भावाः, मत्तः परमकारणादेव भाव उत्पत्तिर्येषां, अत एव मानसाः, संकल्पमात्राज्जाताः ॥ ६ ॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकल्पेन[1] योगेन युज्यते नात्र संशयः ॥ ७ ॥**

एतां बुद्धिज्ञानमित्याद्युक्तां विभूतिं सर्वकर्तृत्वादिकमैश्वर्यं, योगं प्राणिनां कृतस्य कर्मणः फलप्रापणे संबन्धं, यो वेद । सोऽविकल्पेन निर्विघ्नेन योगेन, योगाभ्यासपूर्वं ज्ञानकर्मसमुच्चयेन, युज्यते संबद्धो भवति ॥ ७ ॥

**अयं[2] सर्वस्य प्रभव इतः[3] सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

अयं वासुदेव एव सर्वस्य जगत आदिकारणम् । इतोऽस्मादेव सर्वं

---

१ 'सोऽविकम्पेन' इति प्रचलितपाठः, प्रायः काश्मीरपाठोऽपि ।

२ 'अहं' इति प्रचलितपाठः, कलकत्तामातृकायामपि दृश्यते ।

३ 'मत्तः' इति प्रचलितपाठः, कलकत्तामातृकायामपि दृश्यते ।

लोकयात्रानिबन्धनं बुद्ध्यादिकमुत्पन्ने जगति प्रवर्तते । इतीत्थं
३ निश्चिताः, भावेन परमार्थतात्पर्येण भावेन प्रेम्णा समन्विताः बुधाः
मां भजन्ते ॥ ८ ॥

प्रेमैवाह—

मच्चित्ता मद्गतप्राणाः बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति[1] च ॥ ९ ॥

मद्गतप्राणाः । योगधारणादिभिः मय्येव प्राणान् धारयन्तः, मदर्थं
३ प्राणानप्यर्थिभ्यो दित्सवो वा, बोधयन्तः परस्परं, स्वानुभूतं परानपि
ज्ञापयन्तः । कथयन्तश्च मां, परेभ्योऽपि मत्कथां श्रावयन्तः, तुष्यन्ति
स्वयं प्रीयन्ते, रमयन्ति परानपि तोषयन्ति ॥ ९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति[2] ते ॥ १० ॥

बुद्धियोगं बुद्ध्या ज्ञानेन योगं संबन्धं येन ज्ञानसंयोगेन ते मत्सायुज्यं यान्ति ॥ १० ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

तेषां प्रेम्णा भजतामेवानुकम्पार्थं, न तु प्रेमविनाकृतानामश्वमेधादियाजिनामित्यर्थः ॥ ११ ॥

एवं विभूतियोगश्रवणोत्पन्नश्रद्धः —

अर्जुन उवाच ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥

---

१ 'रमयन्ति' इति कलकत्तामातृकायामभिनवगुप्तटीकायां च पाठः । अत्रैव टीकायां स एव व्याख्यातः ।

२ 'मां प्रापयन्ति' इति क्वचिदभिनवगुप्तटीकायां मातृकान्तरे पाठः ।

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मांम् ॥ १३ ॥

पवित्रं परमं मोहलक्षणमहापातकनाशनात् । ऋषयः परावरज्ञा
२ मरीच्यादयः ॥ १२ ॥ १३ ॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा महर्षयः ॥ १४ ॥[3]

एतत् सर्वं, द्वितीयात् प्रभृत्युपदिष्टम् ॥ १४ ॥

वक्तुमर्हस्यशेषेण विभूतीरात्मनः शुभाः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १५ ॥

विभूतीः ज्ञानैश्वर्यादिविशिष्टा भूतीः चेतनाचेतनेषु स्वात्मनः प्रादुर्भावान् ॥ १५ ॥

विभूतिज्ञाने प्रयोजनमाह—

कथं विद्यामहं योगिंस्त्वामहं परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १६ ॥

योगिन्निति । योगः, सर्वस्मिन् जगति प्रोक्तेनोतप्रोतन्यायेन संबन्धो

---

१ 'मे' इति प्रचलितपाठः, क्वचिदभिनवगुप्तटीकामातृकान्तरेऽप्युपलभ्यते ।

२ '॰र्देवा न दानवाः' इति प्रचलितपाठः । मातृकान्तरे '॰देवमहर्षयः' इत्यपि दृश्यते ।

३ अतःपरं प्रचलितपाठे तथा काश्मीरपाठे विद्यमानः—

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥

इति श्लोकः आनन्दवर्धनपाठे न दृश्यते ।

४ 'दिव्या ह्यात्मविभूतयः', इति प्रचलितपाठः । कलकत्तामातृकायां तु 'दिव्या आत्मविभूतयः' इति पठितम् ।

५ विद्यामहं योगिंस्त्वां सदा' इति प्रचलितपाठः । 'विद्यां महायोगिंस्त्वामहं' इति प्रायः काश्मीरपाठः । गोण्डलपाठस्तु मूलानुसारी ।

३ यस्य तस्य आमन्त्रणम् । भवन्तीति भावाः, चेतनाचेतनाः प्राणिन-
स्तेषु ॥ १६ ॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १७ ॥

॥ १७ ॥

अत्रोत्तरं—

श्रीभगवानुवाच ।

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १८ ॥

दिव्या, मानुषीं बुद्धिमतिक्रान्ताः ॥ १८ ॥

तत्र तावत् प्रथमां परमात्मस्वरूपां परमां विभूतिमाह—

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ १९ ॥

सर्वेषां भूतानां चेतनानामाशये, हृदि, सर्वत्र अन्तर्यामित्वेन
३ स्थितः ॥ १९ ॥

एवं परां विभूतिं योगिध्येयामुक्त्वा स्थूला आह—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २० ॥

आदित्यानामदितेः पुत्राणां मध्ये विष्णुस्त्रिविक्रमः । द्वादशानां सूर्याणां
३ मध्याद्विष्णुनामा सूर्यश्च । सर्वत्र निर्धारणे षष्ठी ॥ २० ॥

वेदानां सामवेदोऽस्मि[2] देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २१ ॥

भूतानां पृथिव्यादीनां शरीरेन्द्रियविषयाख्यया त्रिप्रकाराणां मध्ये

---

१ 'विभूतीरात्मनः शुभाः' इति प्रायः काश्मीरपाठः । आनन्दवर्धनपाठ-
स्त्वत्र प्रचलितपाठानुसारी ।

२ 'सामवेदोऽहं' इति प्रायः काश्मीरपाठः ।

चेतनास्मि । चेतयत्यनया इति चेतना विषयग्रहणशक्तिः । शक्तिशक्ति-
३ मतोरभेदादिन्द्रियाख्यः प्रकारोऽस्मि ॥ २१ ॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २२ ॥

रुद्राणामेकादशानाम्, शिखरिणामुन्नतानां शैलानां मध्ये मेरुः ॥ २२ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं[1] स्कन्दः सरसामस्मि सागरः ॥ २३ ॥

सरसां देवखातानां मानसादीनां मध्ये ॥ २३ ॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम्[2] ।
यज्ञानां जपयज्ञोऽस्मि[3] स्थावराणां हिमाचलः[4] ॥ २४ ॥

गिरां पदवाक्यरूपेण तत्तदर्थाभिधायिनां शब्दानां मध्ये । एकमक्षरमोंकारोऽस्मि परब्रह्मवाचकत्वात् । स्थावराणामचलानां मध्ये
३ हिमाचलः । मेरुहिमाचलयोः शिखरित्वस्थावरत्वेन भेदः ॥ २४ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २५ ॥

देवाः सन्तः मन्त्रदर्शित्वेन ये ऋषित्वं प्राप्तास्ते देवर्षयः । प्रयत्नं विना ये सिद्धिं प्राप्तास्ते सिद्धाः ॥ २५ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं[5] गजेन्द्राणां नराणां च नराधिपम् ॥ २६ ॥

॥ २६ ॥

---

१ 'सेनान्यामप्यहं' इति क्वचित् रामकव्यभिनवगुप्तटीकयोः पाठः ।

२ 'गिरामप्येक°' इति प्रायः काश्मीरपाठः ।

३ 'जपयज्ञोऽहं' इति रामकविपाठो, गोण्डलकलकत्तामातृकयोर्दृश्यते ।

४ 'हिमालयः' इति प्रचलितपाठः, प्रायः काश्मीरपाठोऽपि ।

५ 'ऐरावणं' इति गोण्डलकलकत्तामातृकयोः पाठो, रामकविनाप्यनुसृतो वर्तते ।

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि[1] कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २७ ॥

प्रजनः प्रजोत्पत्तिहेतवः । जातावेकवचनम् । तेषां मध्ये कन्दर्पोऽहम् ॥ २७ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतां[2]महम् ॥ २८ ॥

संयमतां पापान्निवारयतां मध्ये यमोऽहम् ॥ २८ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ २९ ॥

कलयितुं गणयितुं प्रयुञ्जाना इति हेतुमण्णिचि कलयन्तः । यौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययाः, मुहूर्तदिनपक्षादयो वा । तेषां मध्ये
३ कालोऽहम् ॥ २९ ॥

पवनः प्लवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३० ॥

प्लवतां वेगवताम् ॥ ३० ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३१ ॥

सर्गाणां सृष्टिक्रमाणाम् । यत् त्वहमादिरित्यादि प्रागुक्तं (श्लो० १९)
तच्चेतनानां पुरुषाणामपेक्षया । इह तु तत्क्रियामचेतनामपेक्ष्येत्यपौन-
३ रुक्त्यम् । प्रवदतां, वादप्रकर्षं प्रतिपादयतां, वाक्यानां वादजल्प-
वितण्डारूपाणां मध्ये वादो, वादलक्षणं वाक्यमस्मि । तथा च
शास्त्रम्—वादो नाम वीतरागयोः पक्षप्रतिपक्षपरिग्रहपूर्वकः प्रमाण-

---

१ 'प्रजनस्यास्मि' इति कलकत्तामातृकापाठः । तमेव टीकायामानन्दवर्धनो लक्ष्यीकरोति ।

२ 'संयमिना°' इति कलकत्तामातृकापाठः । अन्यत्र 'संयच्छता°' इत्यपि दृश्यते क्वचित् ।

तर्कपूर्वकसाधनोपालम्भप्रयोगे क्रियमाणे एकतरपक्षनिर्णयावसानो वाक्यसमूहः[1] ॥ ३१ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३२ ॥

सर्वेषां स्वराणामव्यक्तत्वे प्रथमा प्रकृतिरकार एव । व्यञ्जनानां तु प्राणप्रदः स्वरहीनानामनुच्चार्यत्वात् । सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः उभयपदप्राधान्यत्वात् । अक्षयः कालः, सर्गप्रलययोर्गणयिता, लक्षितः प्राक् । धाता सर्वकर्मफलानां सर्वतोमुखो विधाता, सर्वेषु कर्मफलदातृषु मुखं सांमुख्यं यस्येदृशः । सर्वेषां कर्मफलदातॄणां मध्येऽहं मुख्यो दाता ॥ ३२ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३३ ॥

सर्वहरो मृत्युः, प्रलयकर्ता कालः, भविष्यतामुद्भवः सर्गकर्ता, कालोऽहम् नारीणां दक्षपुत्रीणां मध्ये कीर्तिप्रभृतिरहम् ॥ ३३ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३४ ॥

मासानां मध्ये मार्गशीर्षोऽहमग्रहायणत्वात् तत्तद्व्रतारम्भकालत्वाच्च ॥ ३४ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३५ ॥

छलयतां परवञ्चनप्रकाराणां मध्ये द्यूतमस्मि । तेजस्विनां परप्रकाशकारणानां सूर्यादीनां मध्ये तेजोऽस्मि । सूर्यादीनामपि प्रकाशकारणमहमेवेत्यर्थः । एवं जयकारणानां मध्ये जयोऽस्मि । उद्योगकारणानां मध्ये उद्योगोऽस्मि । सत्त्वं धैर्यं, धैर्यकारणानां मध्ये धैर्यमस्मि ॥ ३५ ॥

---

१ ± न्यायसूत्र, १।२।४२।

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३६ ॥

कवीनां सूक्ष्मार्थोल्लेखिनाम् ॥ ३६ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३७ ॥

दमयतां दमनकारणानां मध्ये दण्डोऽस्मि । जिगीषतामिति धर्मध-
र्मिणोरभेदात् जिगीषाकारणानां मध्ये नीतिरस्मि । ज्ञानवतामेकस्मि-
३ न्नेव विषये नानाप्रकाराणि हिताहितानि ग्रहणानि ज्ञानानि विद्यन्ते
इति नानाज्ञानानां मध्ये ज्ञानं परमार्थज्ञानमस्मि । गुह्यानां गोपना-
प्रकाराणां मौनं चैवास्मि ॥ ३७ ॥

एतदुपसंहरति—

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत् स्यान्मम भूतं चराचरम् ॥ ३८ ॥

सर्वेषां भूतानां बीजं यत् किमप्यस्ति तदहमेव । चराचरं भूतं मम
२ विना यत् स्यात् तन्नास्त्येव ॥ ३८ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ३९ ॥

अन्त इयत्तावधिर्नास्ति । उद्देशतः किंचिन्मात्रनामकीर्तनात् ॥ ३९ ॥

अत्र सर्वत्र संग्रहमाह—

यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छेस्त्वं मम तेजोंऽशसंभवम् ॥ ४० ॥

विशिष्टा भूतिर्जन्मैश्वर्यं वा, तद्युक्तं विभूतिमत् ॥ ४० ॥

---

१ 'तद्बीजमह' इति क्वचिद्रामकविटीकामातृकायां पाठः ।
२ '…वाबगच्छ' इति …तः ।

अथवा बहुनैतेन[१] किं ज्ञानेन[२] तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४१ ॥

अथवा एतेन यद्यद्विभूतिमदित्युक्तेन बहुना नानाभेदप्रतिपादकेन ज्ञानेन तव किं स्यात् । अहमेकांशेन कृत्स्नं जगत् विष्टभ्य व्याप्य
३ वितत्य च स्थित इत्योम् ॥ ४१ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ दशमोऽध्यायः ॥ १० ॥

---

१ 'बहुनोक्तेन' इति रामकविपाठः । गोण्डलमातृकायामपि दृश्यते ।
२ 'ज्ञातेन' इति प्रचलितपाठः ।

## ॥ एकादशोऽध्यायः ॥

ॐ श्रीशारदायै नमः ॥ एवं चतुर्दशस्येश्वरस्य प्रकृतिपुरुषाधिष्ठानेन विश्वात्मना विनिश्चित्य प्राग्लक्षितस्य कालस्वरूपस्य परीक्षार्थम्--

अर्जुन उवाच ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

३ अध्यात्मसंज्ञितं परमात्मविषयज्ञानमयम् । मोहोऽयमनात्मन्यात्म-
बुद्धिः ॥ १ ॥

भवा[1]न्ययौ हि भूतानां श्रुतौ विस्तर[2]तो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

त्वत्तः परमकारणादेकस्मात् सर्वेषां भूतानामुत्पत्तिप्रलयौ मया
विस्तरतः श्रुतौ । अव्ययमनवच्छिन्नं माहात्म्यं परमव्यापकत्वमपि
३ विभूतिलक्षणाच्छ्रुतम् ॥ २ ॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छा[3]मि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

अतीन्द्रियस्तवात्मा श्रुत एव । किं तु तवैश्वरं रूपं सर्वभूतनिवासात्मिकां दिव्यां मूर्तिं द्रष्टुमिच्छामि ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगी[4]श्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

---

१ 'भवाप्ययौ' इति प्रचलितपाठः प्रायः सर्वत्र । कलकत्तामातृका त्वत्र मूलानुसारिणी ।

२ 'विस्तरशः' इति प्रचलितपाठः ।

३ '-मिच्छाम्यहं' इति क्वचिदभिनवगुप्तटीकामातृकायां पाठः ।

४ 'योगेश्वर' इति प्रचलितपाठः ।

योगीश्वर महाविदेहाख्यया योगसिद्ध्या सद्यः सर्वं जगत् कर्तुं समर्थः। अव्ययमात्मानमनादिनिधनस्वरूपम् ॥ ४ ॥

एवमभ्यर्थितो—

श्रीभगवानुवाच।

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

एतत् सामान्यत उद्दिश्य विशेषेणाह—

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥

शक्रसभायां दृष्टपूर्वानादित्यादीन् पश्य। एवमदृष्टपूर्वाण्यन्यान्यप्या-
३ श्चर्याणि पश्य ॥ ६ ॥

अदृष्टपूर्वाण्येवाह—

इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

मया पूर्वमेव यत् सामान्यतः प्रोक्तोऽपि। यच्चान्यदिति दुर्योधनादीन्
३ मया पूर्वं हतानित्यर्थः ॥ ७ ॥

मन्यसे यदि तच्छक्यमिति यदुक्तं, तत्राह—

न तु मां शक्यसे[2] द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्[3] ॥ ८ ॥

अनेनैव मर्त्यजन्मानुगुण्यात् परिमितदर्शिना चक्षुषा। ऐश्वरयोग-
३ मीश्वरस्य युक्तिमचिन्त्यघटनतां, पश्य। तथा च स्तुतम्—

---

१ 'पाण्डव' इति काश्मीरपाठः।

२ 'शक्यसि' इति कलकत्तापाठः, रामकविटीकायां दृश्यते। 'शक्ष्यसि' इति गोण्डलपाठः।

३ 'रूपमैश्वरम्' इति क्वचिदभिनवगुप्तपाठः।

निरुपादानसंभारमभित्तावेव कल्पते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥

६ इति । अथ च दृश्यमानोऽस्मिन्नेकत्र भूतसङ्घे ममैश्वर्येण संबन्धं पश्य ॥ ८ ॥

इतीमं वृत्तान्तं धृतराष्ट्रं प्रति—

संजय उवाच ।

एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

अनेकधा चराचरादिचतुर्दशभूतसर्गाणां नानाप्रकारैः प्रविभक्तं विभा-
३ गप्रकर्षेण युक्तं, न तु संकीर्णमित्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

अथ भगवतो वैश्वरूप्यं दृष्ट्वार्जुनवृत्तमाह—

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

ततो विश्वरूपदर्शनानन्तरं विस्मयेनालौकिकेन चित्तचमत्कारेणाविष्टो-

---

१ 'योगेश्वरो' इति प्रचलितपाठः ।

२ 'माल्याम्बर॰' इति प्रचलितपाठः, रामकविनानुसृतः ।

३ ऽत एव हृष्टरोमा अर्जुनः, देवं पुरस्थितं श्रीकृष्णं, वैश्वरूप्यदर्शना-
ज्ञातभक्त्यातिशयः मूर्ध्ना प्रणम्य कृताञ्जलिरिदं वक्ष्यमाणमाह ॥१४॥

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दीप्तान् ॥ १५ ॥

भूतविशेषाणां चराचराणां सङ्घातान्, सार्थान् । ब्रह्मणो दर्शना-
दूर्ध्वं सत्यलोकान्तं दर्शनमुक्तम् । ऋषिदर्शनादूर्ध्वं यद्धुवो महो-
३ लोकान्तम् । उरगदर्शनात् सप्तपातालदर्शनम् ॥ १५ ॥

नानाविधभूताश्रितसप्तलोकादिदर्शनेऽपि त्वामेवैकं सर्वलोकाश्रयं पश्यामीत्याह—

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूपम् ॥ १६ ॥

३ विश्वस्येश्वरो नियन्ता विश्वानि कार्यकरणाद्यात्मकानि रूपाणि
यस्य ॥ १६ ॥

इदमेव च भवतो रूपं सर्वदा परिचितं पुरोऽवस्थितं भगवदनुग्रहात् परं ब्रह्म तेजोमयं पश्यामीत्याह—

---

१ 'दिव्यान्' इति प्रचलितपाठो, गोण्डलमातृकायां दृश्यते ।

२ 'त्वां' इति काश्मीरपाठो नीलकण्ठेन अनुसृतः । 'त्वा' इति तु प्रचलितशाङ्करपाठः ।

३ 'विश्वरूप' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते, तथाभिनवगुप्तपाठेऽपि ।

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां[1] दुर्निरीक्ष्यं[2] समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

सुगमोऽर्थः ॥ १७ ॥

यत् प्राक् श्रुतं तदेव प्रत्यक्षीकृत्याह—

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः सात्वतधर्मगोप्ता[3]
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

ॐ तत्सदिति निर्देशः (१७।२३) इति वक्ष्यमाणोक्तेः, सदिति ब्रह्मनाम, तद्विद्यते यस्मिन्निति सत्वान् परमेश्वरः, स देवता येषां ते सात्वताः, ब्रह्मविदस्तेषां धर्मस्य ज्ञानकर्मसमुच्चयानुष्ठानस्य गोप्ता मतो मे इति । यत् त्वयातीन्द्रियं ब्रह्म व्याख्यातम्, तदद्य सर्वं मया प्रत्यक्षीकृतमित्यर्थः ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां[4] दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

स्फुटोऽर्थः ॥ १९ ॥

---

१ 'त्वा' इति रामकविपाठः, गोण्डलमातृकायां दृश्यते । 'त्वां' इति तु प्रचलितपाठः ।

२ 'दुर्निरीक्षं' इति कलकत्तामातृकायां, तथा क्वचिदभिनवगुप्तपाठेऽपि ।

३ 'शाश्वतधर्म॰' इति प्रचलितपाठो, गोण्डलकलकत्तामातृकयोरपि । रामकवेरपि स एव पाठः ।

४ 'त्वा' इति गोण्डलपाठः कलकत्तापाठश्च । अन्यत्रापि क्वचिदुपलभ्यते ।

एवं सर्वव्यापकं परमेश्वरस्वरूपं निरूप्य कुरुसंहारकं घोरं काल-रूपं दृष्ट्वाह—

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाद्भुतं रूपमुग्रं[1] तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

स्पष्टोऽर्थः ॥ २० ॥

लोकत्रयस्य व्यथामेवाह—

अमी हि त्वां[2] सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीति[3] चोक्त्वैव महर्षिसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

॥ २१ ॥

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां[4] विस्मिताश्चैव सर्वे ॥ २२ ॥

उष्मपाः पितरः। अद्भुतदर्शनाद्विस्मिताः साश्चर्याः त्रस्ताश्च ॥ २२ ॥

---

१ 'रूपमिदं तवोग्रं' इति प्रचलितशाङ्करपाठः। 'रूपमिदं तवेदृग्' इति प्रायः काश्मीरपाठः, 'रूपमुग्रं तवेदृग्' इत्यपि च क्वचित्। 'रूपमुग्रं तवेदं' इति तु नीलकण्ठपाठः।

२ 'त्वा' इति प्रायः काश्मीरपाठः।

३ 'स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः' इति तृतीयचरणस्य प्रचलितपाठः।

४ 'त्वा' इति प्रचलितः शाङ्करपाठः।

अत्र विशेषतः स्वामवस्थामाह—

रूपं महत् ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

करालमतिभयानकं रूपं दृष्ट्वा सर्वे त्रिलोकस्थाः, प्राणिनः अहं च,
३ प्रव्यथिताः प्रकर्षेण व्यथां प्राप्ताः ॥ २३ ॥

भयानकत्वमेवाह—

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

धृतिं न विन्दामि, चित्तानवस्थानादाकुलतां भजामि । शमं न
३ विन्दामि, मनो ज्वलति ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

अमी च [2] त्वां धृतराष्ट्रस्य पुत्राः
[3] सर्वैः सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

॥ २५ ॥ २६ ॥

---

१ 'त्वा' इति गोण्डलपाठो रामकविपाठश्च ।

२ 'अमी सर्वे' इति प्रायः काश्मीरपाठः ।

३ 'सर्वे' इति प्रचलितपाठः, अभिनवगुप्तेनाप्यनुकृतो वर्तते ।

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।[1]
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥[2]

॥ २७ ॥

राज्ञां कालमुखप्रवेशे निदर्शनमाह—

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति[3] ।
तथा तवामी नरलोकवीरा[4]
विशन्ति वक्त्राण्यभितो ज्वलन्ति[5] ॥ २८ ॥

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समिद्धवेगाः[6] ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

॥ २८ ॥ २९ ॥

---

१ अत्र प्रथमार्धानन्तरं कलकत्तामातृकायामधिकः श्लोकार्धो यथा--
सहस्रसूर्यात[प]संनिभानि
तथा जगद्भासकृतक्षणानि ।

२ अत्र काश्मीरपाठे सार्धश्लोकोऽधिकः, स यथा--
नानारूपैः पुरुषैर्योध्य(पा. भे., र्वध्य, तथा र्बाध्य)माना
विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधा
शस्त्रैः कृत्ता विविधैः सर्व एव ॥
त्वत्तेजसा वि(पा. भे., नि)हता नूनमेव (पा. भे., मेते)
तथा हीमे त्वच्छरीर(पा. भे., ॰रं, तथा ॰रे)प्रविष्टाः ॥

३ 'व्रजन्ति' इत्याभिनवगुप्तपाठः ।

४ 'नरदेवलोका' इति कलकत्तामातृकापाठः ।

५ '॰ण्यभिविज्वलन्ति' इति प्रचलितपाठः ।

६ द्वितीयचरणेऽपि 'समृद्धवेगाः' इति कलकत्तामातृकावर्जं सर्वत्र पाठः ।

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत् समग्रं
भासस्तवोग्राः प्रपतन्ति[1] विष्णो[2] ॥ ३० ॥

॥ ३० ॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

प्रसीद क्रूरमाकारं त्यक्त्वा, को भवानुग्ररूप इत्याख्याहि ॥ ३१ ॥

एवं प्रार्थितः स्वं स्वरूपं प्रवृत्तिं च—

श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत् प्रवृद्धाँ-[3]
ल्लोकान् समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां[4] न भवन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

पृथिवीभारभूतान् लोकान् संहर्तुं प्रवृत्तः, संहारकर्ता, कालस्व-
३ रूपोऽस्मि इत्यर्थः । ऋतेऽपि त्वा इति तु, यद्यपि एतान् घृणया
हन्तुं नेच्छसि, तथापि मयैते हता एवेत्यर्जुनप्रोत्साहनार्थम्
॥ ३२ ॥

१ 'प्रतपन्ति' इति प्रचलितपाठः, कलकत्तामातृकावर्जं प्रायः काश्मीरपाठश्च ।

२ 'विष्णोः' इति गोण्डलमातृकापाठः, क्वचिदन्यत्रापि दृश्यते ।

३ 'प्रवृद्धो' इति प्रचलितपाठः गोण्डलमातृकायामपि दृश्यते ।

४ 'ऋतेऽपि त्वा' इति प्रचलितशाङ्करपाठः । 'ऋते त्वदेते' इति कलकत्तामातृकापाठः ।

यद्वा जयेम यदि वा नो जयेयु( २।६ )रिति प्रागुद्दिष्टं संशयमपाकरोति—

तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि लोकवीरान्[1] ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

॥ ३३ ॥ ३४ ॥

भगवद्वचनोत्तरकालिकीमर्जुनावस्थां—

संजय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

॥ ३५ ॥

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६ ॥

स्थाने इति विभक्तिप्रतिरूपकमव्ययं युक्तमित्यत्रार्थे । एतत् सर्वं

१ 'योधवीरान्' इति प्रचलितपाठः । 'वीरयोधान्' इति, 'वीरलोकान्' इति चान्यत्र क्वचित् पाठः ।

तव प्रकीर्त्या, भगवन्नामकीर्तनमात्रेण, जगत् प्रहृष्यतीत्यादिकं स्थाने
३ युक्तमेवेत्यर्थः ॥ ३६ ॥

कस्माच्चं[1] ते न नमेरंन्[2] महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसतोः[3] परं यत् ॥ ३७ ॥

सत इन्द्रियगोचरात् । असत इन्द्रियागोचरात् । प्रधानाच्च परम् ॥ ३७ ॥

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं चं[4] परं च धाम
त्वया ततं विश्वमनन्तरूपम्[5] ॥ ३८ ॥

॥ ३८ ॥

एवं परां व्याप्तिमुक्त्वापरामाह—

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।[6]
अनादिमानप्रतिमप्रभावः
सर्वेश्वरः सर्वमहाविभूते ॥ ३९ ॥

---

१ 'कस्माच्चैते' इत्यभिनवगुप्तपाठः ।

२ 'नमेरन्' इतिस्थाने 'नमेयुर्' इति रामकव्यभिनवगुप्तयोस्तथा गोण्डलमातृकायां च पाठः ।

३ 'सदसत् तत्परं' इति प्रचलितपाठः, प्रायः काश्मीरपाठोऽपि ।

४ 'च परं' इतिस्थाने 'परमं' इति गोण्डलमातृकापाठः । क्वचिदन्यत्रापि ।

५ '॰मनन्तरूप' इति प्रचलितपाठः । '॰मिदं समस्तम्' इति कलकत्तामातृकापाठः ।

६ अस्य श्लोकस्योत्तरार्धः प्रचलितपाठे न विद्यते ।

हे सर्वमहाविभूते, सर्वेभ्यः ऐश्वर्यगुणयुक्तेभ्यः महती प्रकृष्टा विभूतिः
३ शक्तिविस्तारो, सर्वा दशमोक्ता महत्यो विभूतयः यस्येति च,
तस्यामन्त्रणम् ॥ ३९ ॥

भगवन्तं सर्वदिग्देशकालाकारैक्यात्मने परामृशन् प्रणमति—

नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ।
नमः पुरस्तादथ पृष्ठतश्च[1]
नमोऽस्तु ते सर्वत एव सर्व ॥ ४० ॥

अत्र नमस्काराणां पौनःपुन्येनावृत्तिः प्रत्यभिज्ञातपरमेश्वरस्वरूपस्या-
३ र्जुनस्य भक्तिश्रद्धातिशयं द्योतयति ॥ ४० ॥

न हि त्वदन्यः कश्चिदस्तीह देव
लोकत्रये दृश्यतेऽचिन्त्यकर्मा ।[2]
अनन्तवीर्या[3]मृतविक्रमस्त्वं
सर्वं समा[4]प्नोषि ततोऽसि सर्वः ॥ ४१ ॥

वीर्यं मानसिकम्, उत्साहशक्तिः पराक्रमः शारीरिकः, क्रियाशक्तिः
॥ ४१ ॥

अथ भगवतः परमैश्वर्यप्रत्यभिज्ञानात् प्राक् सखित्वादिप्रतिपत्त्या-
विहितमतिक्रमं मन्यमानः तत्क्षान्त्यर्थं श्लोकचतुष्टयेनाह—

---

१ 'पृष्ठतस्ते' इति प्रचलितपाठः, प्रायोऽन्यत्रापि सर्वत्र ।

२ अयं श्लोकार्धः प्रचलितपाठे न विद्यते ।

३ 'अनन्तवीर्यामित°' इति प्रचलितपाठः । 'अनन्तवीर्योऽमित°' इति
क.लकत्तामातृकायां तथा रामकव्यभिनवगुप्तपाठेऽपि ।

४ 'व्याप्नोषि सर्वं च' 'इति गोण्डलमातृकापाठः ।

सखेति मत्वा प्रसभं यदुक्तं[1]
हे कृष्ण हे यादव हे सखे च[2] ।
अजानता महिमानं तवेदं[3]
मया प्रमादात् प्रणयेन वापि ॥ ४२ ॥

तवेदं माहात्म्यमिदानीं साक्षात्कृतमजानता मया प्रमादादज्ञानात्, प्रणयेन स्नेहपूर्वकेण वशीकारेण वापि । अयं सखा ममेति मत्वा प्रसभं सोत्कर्षरूपेण बलात्कारेण हे कृष्णेत्यादि यदुक्तं, तत् क्षामये त्वामित्यग्रिमेणान्वयः ॥ ४२ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत सत्समक्षं[4]
तत् क्षामये त्वामहमप्रमेयम् ॥ ४३ ॥

अवहासो नर्मलीलासु परिहासः । एकः एकाकी । सत्समक्षं सतां बहूनां संनिधौ वा, असत्कृतोऽसि अनादृतोऽसि, तत् क्षन्तव्यमित्यर्थः ॥ ४३ ॥

अप्रमेयत्वमचिन्त्यप्रभावतां प्रपञ्चयति—

पितास्य[5] लोकस्य चराचरस्य
त्वमस्य[6] पूज्यश्च गुरुर्गरीयान् ।

---

१ 'यदुक्तः' इत्यभिनवगुप्तपाठः ।

२ 'सखेति' इति प्रचलितपाठः । टीकायां स एव स्वीकृत इति भाति ।

३ 'तवेमम्' इति प्रायः काश्मीरपाठः ।

४ 'तत्समक्षं' इति प्रचलितपाठः, प्रायः काश्मीरपाठश्च । 'मत्समक्षं' इति पाठस्तु भ्रममूल एव ।

५ 'पितासि' इति सर्वत्र पाठः ।

६ 'विश्वस्य' इति प्रायः काश्मीरपाठः, कलकत्तामातृकावर्जम् ।

न त्वत्समोऽस्त्यधिकः[1] कुतो नु[2]
लोकत्रयेऽप्यप्रतिमप्रभावः[3] ॥ ४४ ॥

सुगमोऽर्थः ॥ ४४ ॥

तस्मात् प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियस्यार्हसि[4] सोढुमर्हन्[5] ॥ ४५ ॥

कायं प्रणिधाय, दण्डवत् भूमौ पतित्वा, प्रणम्य नमस्कृत्य ॥४५॥

अथेश्वरस्य माहात्म्यप्रत्यभिज्ञानमाह—

दिव्यानि कर्माणि तवाद्भुतानि
पूर्वाणि पूर्वेऽप्यृषयः स्मरन्ति।
नान्योऽस्ति कर्ता जगतस्त्वमेको
धाता विधाता च विभुर्भवश्च ॥ ४६ ॥[6]

धाता धारयिता। विधाता स्रष्टा ॥ ४६ ॥

तवाद्भुतं किं नु भवेदसह्यं
किं वाशक्यं पुरतः[7] कीर्तयिष्ये।
कर्तासि सर्वस्य यतः स्वयं वै
विभो ततः सर्वमिदं त्वमेव ॥ ४७ ॥

---

१ '॰ऽस्त्यभ्यधिकः' इति प्रचलितपाठः, प्रायः काश्मीरपाठोऽपि।

२ 'कुतोऽन्यः' इति पाठः प्रायः सर्वत्र दृष्टः। कलकत्तामातृकापाठस्तु मूलानुगामी।

३ '॰प्रभाव' इति प्रचलितपाठः।

४ 'प्रियायार्हसि' इति प्रचलितपाठः।

५ 'देव सोढुम्' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र।

६ श्लोकाः ४६–४८ प्रचलितपाठे न पठिताः।

७ 'परतः' इति पाठः सर्वत्र काश्मीरपुस्तकेषु।

अत्यद्भुतं कर्म न दुष्करं ते
कर्मोपमानं न हि विद्यते ते ।
न ते गुणानां परिमाणमस्ति
न तेजसो नापि बलस्य र्ऋद्धेः ॥ ४८ ॥[2]

दिव्यानि कर्माणीत्यादिकं श्लोकद्वयमेतद्भाष्ये नास्ति ॥ ४७ ॥ ४८ ॥

अथैतद्रूपं मानुषप्रकृतित्वाच्चिरकालं द्रष्टुमसमर्थः चिरपरिचितमेवरूपं द्रष्टुं प्रार्थयतेऽर्जुनः —

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४९ ॥

३ हृषितोऽस्मि, रोमाञ्चितोऽस्मि ॥ ४९ ॥

किरीटिनं गादिनं चक्रहस्त-
मिच्छामि त्वां[3] द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन[4]
सहस्रबाहो भव विश्वमूर्ते ॥ ५० ॥

सुबोधमेतत् ॥ ५० ॥

---

१ 'नर्द्धेः' इति प्रायःपाठः ।

२ नेपालपाठे ४६ श्लोकस्य पूर्वार्धः, तथा ४८ श्लोकस्योत्तरार्धः, इति मिलित्वा एक एवाधिकः श्लोकोऽत्र पठितो यथा—

इमानि कर्माणि तवाद्भुतानि
कृतानि पूर्वं मुनयो वदन्ति ।
न ते गुणानां परिमाणमस्ति
न तेजसश्चापि बलस्य विष्णो ॥

३ 'त्वां' इति पाठोऽन्यत्र सर्वत्र वर्तते, कलकत्तामातृकावर्जम् ।

४ 'भुजद्वयेन' इति गोण्डलमातृकापाठः ।

अथैवं प्रार्थितो--

श्रीभगवानुवाच।

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात्।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ५१ ॥

आत्मयोगादैक्यात्मज्ञानोपदेशेन मयि त्वद्योगः। त्वयि च मम
३ योगः संबन्धः। इत्येवंप्रकारात् परमैश्वर्यसंबद्धमेतद्रूपं प्रकटीकृतम्
॥ ५१ ॥

यस्त्वेवंविधमेनं योगं न प्राप्तः, स द्रष्टुमशक्तोऽस्य स्वरूपस्येत्याह–

न वेदयज्ञाधिगमैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः।
एवंरूपः शक्यं अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ५२ ॥

शक्य अहमिति च्छान्दससिद्धिः ॥ ५२ ॥

मा ते व्यथा मा च विमूढता भू-
द्दृष्ट्वा रूपं घोरमुग्रं ममेदम्।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ५३ ॥

॥ ५३ ॥

---

१ 'एवंरूपं शक्यते मां' इति कलकत्तापाठः। 'एवंरूपं शक्यमहं' इति गोण्डलपाठो रामकव्यभिनवगुप्तपाठश्च। आनन्दवर्धनपाठस्तु प्रचलितपाठानुसारी।

२ 'विमूढभावो' इति प्रचलितपाठो, गोण्डलमातृकायां दृश्यते।

३ 'घोरमीदृङ्' इति प्रचलितपाठो, गोण्डलमातृकायां दृश्यते।

अथैतद्धृतराष्ट्रं प्रति—

संजय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५४ ॥

॥ ५४ ॥

ततो निर्भयः सन्—

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५५ ॥

॥ ५५ ॥

अस्य रूपस्य दुर्लभदर्शनतां ख्यापयन्—

श्रीभगवानुवाच ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५६ ॥

देवा ब्रह्मादयोऽपि तत्तत्सर्गादिस्वाधिकारव्यग्रचित्ततयाऽपरामृष्टैत-
३ त्स्वभावाः ॥ ५६ ॥

अत्रोपायमाह—

भक्त्या त्वनन्यया शक्यः[1] अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५७ ॥

॥ ५७ ॥

---

१ 'शक्यः अह०' इत्येव सविसर्गः संधिरहितः पाठो मातृकायाम् । अन्यत्र प्रायः 'शक्यो ह्यह०' इति पाठः । 'शक्य अह०' इति तु प्रचलितपाठः ।

सर्वप्रकरणसारभूतमर्थं सिद्धान्तीकुर्वन्नध्यायमुपसंहरति—

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव॥ ५८॥**

मत्कर्मकृत् श्रुत्युदितानि वर्णाश्रमकर्माणि मत्प्राप्त्यर्थमेव करोति।
३ न तु फलान्तरार्थम्। अत एव मत्परः, अहमापादेयो यस्य। मद्भक्तः
सर्वास्ववस्थासु मय्येव समाहितचित्तः। सर्वभूतेषु सङ्गवर्जितो राग-
हीनः। निर्वैरो द्वेषहीनः। स मामेव ब्रह्मैकात्म्यं प्राप्नोति॥ ५८॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ एकादशोऽध्यायः॥ ११॥

## ॥ द्वादशोऽध्यायः ॥

श्रीशारदायै नमः ॥ श्रीगुरुभ्यो नमः ॥ इत्थं परमेश्वरस्वरूपस्य व्यक्ताव्यक्तस्य लक्षणमवगम्य मत्कर्मकृन्मत्परम इति समनन्तराध्याये (११।५८) भगवदुपदेशं श्रुत्वा तदुपासनायां साकारनिराकारविषयत्वेन संशयानः—

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां[1] पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

सततं यस्यां कस्यांचिदवस्थायां युक्तास्त्वय्येव समाहितचित्ताः, भक्तास्त्वामेवं व्यक्तं चतुर्भुजाद्याकारं पर्युपासते भजन्ते, ये च केचन अक्षरमव्यक्तं निराकारं भजन्ते, तेषामुभयेषां मध्ये के योगवित्तमाः, अतिशयेन त्वत्प्राप्तिसमाधिज्ञाः ॥ १ ॥

एवं विज्ञप्त एकपक्षमवलम्ब्य—

श्रीभगवानुवाच ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

नित्यं सदैव युक्ताः संयमप्रकारेण संयमभाजोऽत एव मयि मन आवेश्य परया श्रद्धया यथोक्तफलावश्यंभावनयोपेताः, मां चतुर्भुजाद्याकारेण प्रत्यक्षदृश्यं भजन्ते, ते मे युक्ततमाः, सुखोपायत्वादतिशयितां युक्तिमापन्नाः, मताः । न तु मुक्तिफलेऽतिशयः ॥ २ ॥

अत एवाव्यक्तोपासने दुष्करत्वमाह—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते[2] ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

---

१ 'भक्तास्त्वां' इतिस्थाने 'भक्त्या त्वां' इति कलकत्तामातृकापाठः ।
२ 'मामुपासते' इति गोण्डलपाठः, अन्यत्रापि क्वचित् ।

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

अचिन्त्यम्, अनण्वस्थूलमह्रस्वमदीर्घमित्यादिश्रुतिप्रतिषिद्धरूपादिकम् । सर्वत्र कार्यकारणात्मिके सर्वस्मिन् वस्तुनि समा मदात्मैक्यदर्शनान्निर्विशेषा बुद्धिर्येषाम् । अत एव सर्वभूतहिते रताः । इन्द्रियग्रामं संनियम्य समाहितचित्ताः । ये मामव्यक्तं निराकारं भजन्ते, तेऽपि मामेव प्राप्नुवन्ति । न तु क्वाप्युपर्यधो वा भूमिकायां तिष्ठन्तीत्यर्थः ॥ ३ ॥ ४ ॥

क्लेशोऽधिकतरस्तेषा[1]मव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहभृद्भि[2]रवाप्यते ॥ ५ ॥

अव्यक्ते, वाङ्मनसगोचरातिक्रान्तस्वभावे मयि निराकारे परमात्मनि, सक्तमावेशितं मनो येषां तेषां क्लेशोऽधिकतरः । यद्यपि मनो बाह्यविषयेभ्यो निवर्त्य मयि साकारे बहुशोऽन्तर्भूतेऽपि मन आवेशयितुं महानेव प्रयासः, तथाप्यव्यक्ते मनः समाधातुं बहुजन्माभ्यस्तयोगविभवैः कैश्चिदेव शक्यते, न सर्वैरित्यर्थः । अत्र हेतुमाह—देहभृद्भिः, नियतजात्याद्यवच्छिन्नं शरीरं, अहमिति भावनया धारयद्भिः, अव्यक्ता गतिः, सर्वभावातिरिक्तब्रह्मस्वरूपापत्तिः, दुःखं क्लेशपूर्वमाप्यते, बहुप्रयाससाध्येत्यर्थः । अत्रायं वाक्यार्थः । शास्त्रचोदितासु क्रियास्वेव वर्तमानः पुरुषः यथा मम साकारस्योपासनाभिः सुखेन मामाप्नोति, न तथा दुष्करसकलक्रियानिषेधतत्पराभिः निराकारोपासनाभिरिति ॥ ५ ॥

एतदेव स्थिरयति—

ये तु सर्वाणि कर्माणि[3] मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

---

१ '°स्तेषां सर्वत्राव्यक्त°' इति गोण्डलपाठः, अन्यत्रापि क्वचित् ।

२ 'देहवद्भि°' इति प्रचलितपाठः गोण्डलमातृकायां दृश्यते । अभिनवगुप्तपाठस्तथा कलकत्तापाठस्तु यथामूलम् ।

३ 'कर्माणि सर्वाणि' इति कलकत्तापाठः ।

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

ये तु, ये पुनरव्यक्तोपासकेभ्योऽन्ये साकारोपासकाः, तेषां ज्ञानकर्म-
३ समुच्चयानुष्ठायिनां, नचिरात् स्वल्पकालेनैव, मृत्युर्मरणं संसारो जन्म
तावेव दुस्तरत्वात् समुद्रस्तस्मात् समुद्धर्तास्मि ॥ ६ ॥ ७ ॥

अत्रोपपत्तिमाह—

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवर्त्स्यसि त्वं मय्येव योगमुत्तममास्थितः ॥ ८ ॥

मय्येव मयि साकारे एव । मनः संकल्पविकल्पात्मकम् । बुद्धिं
३ निश्चयात्मिकाम् । एवमुत्तमं योगं संयमयोगपूर्वं ज्ञानकर्मसमुच्चय-
युक्तिमाश्रितः । मय्येव निवर्त्स्यसि, देहपातोत्तरं मत्सायुज्यमेव
प्राप्स्यसीत्यर्थः ॥ ८ ॥

संयमप्रकारमेवोपदिशति—

अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

अभ्यासयोगेन, षष्ठाध्यायोक्तक्रमेण चित्तसंयमेन, मामाप्तुमिच्छ,
३ इति ॥ ९ ॥

अभ्यासेऽप्यसमर्थस्त्वं मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

---

१ कलकत्तामातृका अत्र मूलानुसारिणी, तथा प्रायो रामकव्यभिनवगुप्त-टीकामातृकाश्च । 'निवसिष्यसि' इति तु प्रचलितपाठः ।

२ 'अत ऊर्ध्वं न संशयः' इति चतुर्थचरणस्य प्रचलितपाठः ।

३ 'अथ चित्तं समाधातुं' इति प्रचलितपाठः ।

४ '॰प्यसमर्थोऽसि' इति प्रचलितपाठः । गोण्डलमातृकायामपि दृश्यते । '॰प्यसमर्थः सन्' इति रामकव्यभिनवगुप्तपाठः ।

५ 'मुक्तिं' इति कलकत्तापाठः ।

योगाभ्यासे चेदशक्तस्त्वं मत्कर्मपरमो भव, मदर्थं कर्माण्येव परमाणि प्रकृष्टान्यभीष्टसाधनानि यस्येदृशो भव । यत्किमपि करोषि चेतसा, तन्मयि समर्पयन् सिद्धिमाप्स्यसीत्यर्थः ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमास्थितः[1] ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्[2] ॥ ११ ॥

अथ यद्येतदपि मदाराधनं कर्म विस्तारात् कर्तुं न शक्नोषि, ततः तर्हि, यतो, विषयेभ्यो निगृहीतश्चासावात्मान्तःकरणं तद्वान् । मद्योगं, मद्विषयं समाधिमास्थितः, सर्वेषां कर्मणां नित्यानामावश्यकानां यथादेशं यथाकालं क्रियमाणानां, फलस्य लोकान्तरोपभोग्यस्य, त्यागमस्पृहारूपं कुरु । अत्रोत्तरोत्तरानुष्ठानं सुकरत्वाय ॥ ११ ॥

एतदेव सिद्धान्तयति—

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरा[3] ॥ १२ ॥

अभ्यासात्, सर्वविषयेभ्यः चित्तस्य भूमिजयक्रमेण वृत्तीनां निरोधे यत्नोऽभ्यासः स योगः तस्मात्, ज्ञानं श्रेयः सर्वेषां भावानां ब्रह्मैकता, सुकरत्वादतिप्रशस्तम् । अस्माच्च ज्ञानात् ध्यानं, निश्चितोपेयवस्तुचिन्तनं, श्रेयः सुकरम् । एवंविधाच्च ध्यानात् कर्मफलत्यागो विशिष्यते सर्वेभ्य उत्कृष्यते । अत्र हेतुमाह । त्यागादेवानन्तरा, तत्कालं प्राप्या, शान्तिर्मुक्तिर्भवतीति । सर्वकर्मफलत्याग एव सुकर इत्यर्थः ॥ १२ ॥

तदेवं सुकरत्वेन साकारोपासनं स्तुत्वा द्वयेषामपि भक्तानां धर्मानाह—

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥

---

१ '॰माश्रितः' इति प्रचलितपाठः ।

२ 'यतात्मवाक्' इति कलकत्तापाठः ।

३ '॰रनन्तरा' इति रामकव्यभिनवगुप्तयोः प्रायः पाठः । '॰र्निरन्तरा' इति गोण्डलपाठः । '॰रनन्तरम्' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते ।

अत्र मैत्री करुणा मुदितोपेक्षेति चत्वार्यपि चित्तपरिकर्माणि[1] लक्षितानि । सर्वभूतेषु ब्रह्मैक्याविर्भावात् द्वेषाभावः । निर्ममः, ममेदं परस्येदमिति त्यक्तभेदबुद्धिः । निरहंकारः, अहं कर्तेत्यभिमानहीनः ॥ १३ ॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः[2] स मे प्रियः ॥ १४ ॥

संतुष्टः अलब्धलाभेच्छाहीनः ॥ १४ ॥

यस्मान्नोद्विजते लोको लोकादुद्विजते[3] न यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो[4] यः स[5] हि मे प्रियः ॥ १५ ॥

अद्वेष्टेत्यादेर्लक्षणमिदम् ॥ १५ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भफलत्यागी[6] यो मद्भक्तः स मे प्रियः ॥ १६ ॥

अनपेक्षः, त्यक्तविषयस्पृहः । दक्षः, ज्ञानकर्मसमुच्चयानुष्ठाने सततोद्युक्तः ॥ १६ ॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभफलत्यागी[7] भक्तिमान् यः स मे प्रियः ॥ १७ ॥

उक्तानामप्येषां धर्माणां दुरनुष्ठेयत्वख्यातये पुनर्वचनम् ॥ १७ ॥

---

१ द्रष्टव्यं योगसूत्रम्, १ । ३३

२ 'मे भक्तः' इति गोण्डलपाठः, क्वचिदन्यत्राप्युपलभ्यते ।

३ '°न्नोद्विजते च' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र दृश्यते ।

४ 'हर्षमन्युभयक्रोधै°' इति गोण्डलपाठः, क्वचिदन्यत्राप्युपलभ्यते । 'हर्षामर्षभयक्रोधै°' इति कलकत्तामातृकायाम् ।

५ 'स च मे' इति पाठः प्रायः सर्वत्रान्यत्र ।

६ '°परित्यागी' इति प्रचलितपाठः ।

७ '°परित्यागी' इति प्रचलितपाठः ।

समः शत्रौ च मित्रे च तथा मानावमानयोः[1] ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

सङ्गविवर्जित इति समपदस्य लक्षणम् । सङ्गो हि हिताहितबुद्धिः, आसक्तिः । तद्रहितः सम इत्यर्थः ॥ १८ ॥

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥

अनिकेतः, एकत्रासक्तिशून्यः ॥ १९ ॥

अध्यायार्थमुपसंहरति—

ये तु धर्म्यामृतमिदं[2] यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

धर्माद्वर्णाश्रमविधेरनपेतं धर्म्यं, स्वजातिविहितेनाचारेणानुष्ठीयमानं, अत एवामृतं मोक्षसाधनमिदमस्मिन्नध्याये प्रोक्तं साकारनिराकारपरमेश्वरभजनं यथोक्तं पर्युपासते । ते श्रद्धधानाः मद्वचनानां फले निश्चिताः । अत एव मत्परमा, अहमेवपरमो येषां ते, भक्ता ममातीव प्रियाः ॥ २० ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
द्वादशोऽध्यायः ॥ १२ ॥

---

१ 'मानापमानयोः' इति प्रचलितपाठः, गोण्डलमातृकायां दृश्यते ।

२ 'धर्मामृतं' इति काश्मीरपाठः ।

## ॥ त्रयोदशोऽध्यायः ॥

श्रीपुरुषोत्तमाय नमः ॥ अथैवं चतुरंशस्य भगवतः ऐक्यात्मज्ञानेन नियतकर्मसमुच्चितेन निःश्रेयसप्राप्तिरिति प्रकरणार्थप्रतिपादनाय प्रथमाध्यायषट्केन चतुर्णामेव प्रकृतिपुरुषकालेश्वराणां प्रकृतिविकृतीनां चोद्देशः कृतः। द्वितीयाध्यायषट्केन लक्षणं कृतम्। अधुनास्मिन्नध्यायषट्के सर्वेषां परीक्षामारभमाणः निर्णीततावद्धर्मांशपक्षपातितया पुनः भूयः भूयः समुद्देशलक्षणात्मपरीक्षणमिति परीक्षालक्षणानुगमनेन,—यथा महाभूतानां कारणानां कार्यजातं विषयेन्द्रियशरीरत्वेन त्रिप्रकारम्। भूमेर्हि विषयो मृत्पाषाणस्थावरलक्षणः। इन्द्रियं प्राणिनां गन्धव्यञ्जकं घ्राणम्। शरीरमिदं मनुष्येषु दृश्यमेव—तथैव परापरायाः पारमेश्वर्योः प्रकृतेरपि कार्यजातं त्रिविधमेव। तत्र महदादयः प्रकृतिविकृतयो विषयेन्द्रियरूपाः। हिरण्यगर्भादिशरीरं तु प्रसिद्धमेव। तदेवमस्मदादीनां स्थूलबुद्धीनां प्रतिबोधनाय स्थूलयोः क्षेत्रक्षेत्रज्ञयोः स्वरूपलक्षणेन—

श्रीभगवानुवाच[1]।

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।**
**एतद्यो वेद[2] तं प्राहुः क्षेत्रज्ञमिति[3] तद्विदः ॥ १ ॥**

---

१ अध्यायारम्भे बहुशः पठ्यमानोऽधिकः श्लोकः प्रायः काश्मीरपाठेऽपि दृश्यते, यथा—

अर्जुन उवाच।
प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥

गोण्डलपाठेऽपरोऽप्यधिकः श्लोकः प्रथमश्लोकस्योत्तरत्वेन पठितो यथा—

श्रीभगवानुवाच।
प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च।
एतत् ते कथयिष्यामि ज्ञानं ज्ञेयं च भारत ॥

२ 'वेत्ति' इति प्रचलितपाठः।

३ 'क्षेत्रज्ञ इति' इति प्रचलितपाठः, क्वचिदभिनवगुप्तटीकायामपि दृश्यते।

इदं, दृश्यमानं चतुर्विंशतितत्त्वसंघातरूपं, शरीरं क्षेत्रमित्युच्यते । अस्मिन् कृतानां कर्मणामेवोप्तानां बीजानां तत्तत्कर्मप्रसवफलनविपाकाश्रयपर्यायं क्षेत्रमित्युच्यते । एतच्छरीरमेव वेद्यं यो वेद जानाति, अस्मिन्नचेतने शरीरे यः चैतन्यवान् जीवात्मा, तं क्षेत्रज्ञमिति प्राहुः । तद्विदः, आत्मविदो मुनयः ॥ १ ॥

क्षेत्रज्ञः ईश्वरादभिन्नो भिन्नो वेत्याह—

क्षेत्रज्ञं[1]मपि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं मम ॥ २ ॥

ममैवांशो जीवलोके (१५।७) इति वक्ष्यमाणनीत्या सर्वेषु क्षेत्रेषु ये क्षेत्रज्ञास्ते ममैवांशा इत्यर्थः । क्षेत्रक्षेत्रज्ञयोर्ज्ञानमात्मानात्मविचारः ॥ २ ॥

तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभा[2]वश्च तत् समासेन मे शृणु ॥ ३ ॥

यच्च यत्स्वरूपं । यादृक् च यत्प्रकारम् । यद्विकारि, ये विकारा रागद्वेषादयः क्षेत्राश्रयेण सन्तीति । यतश्च यदाश्रयाच्च । यत् शुभाशुभं कर्म क्रियते । च पुनः, स क्षेत्रज्ञः यो यत्स्वभावः यत्प्रभावो, यत् तस्य सामर्थ्यम्, तदेतत् सर्वं संक्षेपेण मत्सकाशाच्छृणु ॥ ३ ॥

अत्र श्रद्धां जनयति—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्[3] ॥ ४ ॥

ऋषिभिः याज्ञवल्क्यादिभिः । बहुधा नानास्मृतिवाक्यैः । छन्दोभिः वेदैर्नाना मन्त्रब्राह्मणोपनिषत्प्रकारैः । ब्रह्मसूत्रं वेदान्त[स्त]स्य पादैः । कीदृशैः हेतुमद्भिः, पक्षप्रतिपक्षहेतुसिद्धान्तादिवाक्यार्थयुक्तैः ॥ ४ ॥

---

१ 'क्षेत्रज्ञं चापि' इति प्रचलितपाठः । प्रायः काश्मीरपाठोऽपि कलकत्तामातृकावर्जम् ।

२ 'यत्स्वभावश्च' इति प्रायः काश्मीरपाठः, गोण्डलमातृकावर्जम् ।

३ '॰र्विनिश्चितैः' इति प्रचलितपाठः ।

तत्र क्षेत्रं लक्षयति—

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

अत्र प्रथमार्द्धेन कारणपर्यायाः प्रकृतयो दर्शिताः । इन्द्रियाणीत्यादिद्वितीयार्द्धेन यादृक् शब्दार्थः कार्यवर्गः । इच्छाद्वेषेत्याद्यर्द्धेन यद्विकारीत्यर्थः । संघातो, भूतानामैक्यकरणशरीरापत्तिः । चेतना, रूपादिविषयाणां ज्ञानम् । धृतिः, यया प्राणवायुना वृत्त्या शरीरं धार्यते । एतत् सर्वं कार्यकारणात्मकमचेतनं क्षेत्रमुदाहृतम् ॥ ५ ॥ ६ ॥

एवं तावत् क्षेत्रं लक्षयित्वा क्षेत्रज्ञस्य ज्ञातृत्वं नाम यल्लक्षणमुक्तं तत्र ज्ञानलक्षणं विस्तरयति—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

अमानित्वं, विद्याद्यहंकाराभावः । अदम्भित्वं, लाभपूजाख्यातिकामेन विहितं कर्मानुष्ठानं दम्भस्तद्राहित्यम् । अहिंसा, परेषामपीडनम् । क्षान्तिः, परैः पीड्यमानस्यापि सति सामर्थ्ये क्रोधाभावः । 'मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यत्' इति कुटिलता, तदभावः आर्जवम् । शौचं, बहिरन्तःशुद्धिः । स्थैर्यं, अन्तरायेऽपि स्वकर्मणश्चलनाभावः । आत्मनो मनसो विनिग्रहो, विषयेभ्यो निवर्तनम् ॥ ७ ॥

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

वैराग्यं वैतृष्ण्यम् । अनहंकारः, शरीरादावस्मीति प्रत्ययाभावः । जन्मादिभिः कृतं गर्भवासादिकं क्रियमाणं वा नरकपातादि दुःखं स एव दोषस्तस्य दर्शनं पर्यालोचनम् । तथा चोपरार्के ॥ ८ ॥

---

१ आनन्दाश्रम°, पृ० ९६८–९७९, तथा अन्यत्र ।

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

असक्तिः, यत्र क्वचन सङ्गाभावः, औदासीन्यम् । अनभिष्वङ्गः, ममतात्यागः । समचित्तत्वं, हर्षशोकादिशून्यता ॥ ९ ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

अनन्ययोगेन वासुदेवः सर्वमिति निश्चयादन्येन पदार्थेन योगाभावस्तेन अव्यभिचारिणी । केनचिदपि विघ्नेन निवारयितुमशक्या ॥ १० ॥

अध्यात्मज्ञाननित्यत्वं[1] तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यत्[2] ततोऽन्यथा ॥ ११ ॥

अध्यात्मज्ञानम्, आत्मानमधिकृत्य प्रवृत्तमात्मानात्मविचारणं, तस्मिन् नित्यत्वं तत्परत्वम् । तत्त्वज्ञानार्थदर्शनम्, तत्त्वज्ञानाय शास्त्रपर्यालोचनम् । एतददाम्भिकत्वादिकं ज्ञानमिति तत्त्वज्ञानोपायेनोक्तं, यत् तस्मादमानित्वादेरन्यथा विपरीतं, दम्भाहंकारादि वक्ष्यमाणम्, अज्ञानमित्युक्तम् ॥ ११ ॥

अनेन ज्ञानेन यज्ज्ञेयं तदाह—

ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते ॥ १२ ॥

अमृतं मोक्षम् । आदिमत् आगमापायि महाभूतादिसंघातरूपं क्षेत्रशब्दवाच्यम्, तस्माद्व्यतिरिक्तमागमापायहीनं, सदैकरूपम् । परमुत्कृष्टं ब्रह्म सर्वज्ञं सर्वशक्ति सर्वकर्तृ, इत्यर्थः । परत्वे हेतुमाह । न सत् तत्, सदिति व्यक्तं स्थूलं प्रकटितनामरूपं व्यवहारयोग्यं महदादि, परं ब्रह्म त्वेतद्विलक्षणमित्यर्थः । असदव्यक्तं मूलप्रकृतिरचेतनं, तद्व्यतिरिक्तं चोच्यते ॥ १२ ॥

---

१ '°निष्ठत्वं' इति प्रायः काश्मीरपाठः ।

२ 'यदतो°' इति सर्वत्रान्यत्र पाठः ।

तदेवमनुभयात्मकत्वेऽपि सर्वज्ञत्वसर्वकर्तृत्वादि प्रकाशयति—

सर्वतःपाणिपादान्तं[1] सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

सर्वेषां क्षेत्रज्ञानां यानि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि तत्तद्विषयकरणानि । तत्रायमेक एव, स्वतन्त्रः कर्ता, प्रेरकः । यतः सर्वं तत्त्वसंघातमावृत्य, ज्ञातृत्वाकर्तृत्वादिशक्तिभिर्व्याप्य, तिष्ठति ॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

सर्वेषां ज्ञानकर्मेन्द्रियाणां ये गुणा दर्शनादयः तानाभासयति, तत्तद्विषयग्रहणाभिमुखान् अन्तर्यामित्वेन करोतीति सर्वेन्द्रियाभासम् । सर्वेन्द्रियविवर्जितम्, अशरीरस्यैव कर्तृत्वप्रसिद्धेः । श्रुतं हि[2]—'अपाणिपादो जवनः'—इत्यादि । असक्तं, जडवर्गो यथा ब्रह्माधिष्ठाय तिष्ठति तथा ब्रह्म न किमप्यधिष्ठायेत्यर्थः । अत एव सर्वभृत्, सर्वं जडवर्गं धारयति पोषयति च । निर्गुणं, यथा सत्त्वादीनामेतदधीना प्रवृत्तिः, तथा नास्यगुणाधीना, यतो गुणभोक्तृ, गुणाननुभवति ॥ १४ ॥

एतदेव दर्शयति—

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥
अविभक्तं च[3] भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

बहुशो व्याख्यातमिदम् ॥ १५ ॥ १६ ॥

---

१ '॰पाणिपादं तत्' इति प्रचलितपाठः, रामकव्यभिनवगुप्ताभ्यामनुसृतः ।

२ श्वेताश्वतर, ३ । १९ ।

३ 'विभक्तेषु' इति रामकव्यभिनवगुप्तयोः पाठः । तथा कलकत्तामातृकायामपि ।

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं[1]ज्ञेयं ज्ञानगम्यं सर्वस्यं[2] हृदि विष्ठितम् ॥ १७ ॥

ज्योतिषां सूर्यादीनामपि तज्ज्योतिः प्रकाशकम् । तमो ह्यज्ञानं तस्मात् परम् । अज्ञानान्धकारमतीत्य प्राप्यमित्यर्थः । ज्ञानेनोक्तेनादम्भादिना ज्ञेयम्, साक्षात्करणीयम् । ज्ञानगम्यं ज्ञानेनैव प्राप्यम्, न तु स्वर्गादिवत् तपस्यादिना । सर्वस्य प्रमातुः हृदि विष्ठितम् । सर्वव्यापकं ब्रह्म सर्वत्र बहिरन्तः सदपि हृदये विशेषेण स्थितम् । श्रुतिषु हृदयस्य ब्रह्मोपलब्धिस्थानत्वप्रसिद्धेः ॥ १७ ॥

प्रस्तुतवर्णनार्थमेतदुपसंहरति—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

सुगमोऽर्थः ॥ १८ ॥

प्रकृतमेवाह—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

अनादी, सर्गप्रलयानां पुनः पुनः चक्रवत् परिवर्तनात् प्रकृतिपुरुषयोः संयोगस्य प्रथमा कोटिः केनापि न ज्ञायते । ज्ञानात् त्वन्तकोटिरस्त्येवेत्यर्थः ॥ १९ ॥

एवं सामान्यतः प्रकृतिपुरुषयोः स्वरूपं प्रतिपाद्य विशेषतः प्रतिशरीरं नानात्वेन यथा क्षेत्रज्ञस्तथा प्रतिपादयति—

कार्यका[3]रणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

---

१ 'ज्ञानं ज्ञेयं' इति पाठस्तु सर्वत्रान्यत्र ।

२ 'हृदि सर्वस्य विष्ठितम्' इति प्रचलितशाङ्करपाठः, प्रायः रामकव्यभिनवगुप्तपाठश्च । 'सर्वस्य हृदि मध्यगं' इति कलकत्तामातृकायाम्, 'सर्वस्य हृदि वेष्ठितं' इति गोण्डलपाठस्तथान्यत्र क्वचित् काश्मीरमातृकासु ।

३ '°कारण°' इति प्रायः काश्मीरपाठः । स तु पाठान्तरत्वेन शाङ्करभाष्ये निर्दिष्टो दृश्यते । टीकायां तु '°करण°' इत्येव पाठ आनन्दवर्धनेन व्याख्यातः ।

कार्याणि देहारम्भकाणि भूतानि, करणानि बाह्याभ्यन्तराणीन्द्रियाणि, तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते । यस्य यादृशी सात्त्विकी राजसी तामसी वा प्रकृतिस्तस्य तादृशं शरीरमुत्पद्यते इत्यर्थः । तदेवं प्रकृतिपरतन्त्रः पुरुषः सुखदुःखानां, सात्त्विकादिप्रकृतिकार्याणां, बहुवचनोक्तेः सुखदुःखमोहानां, भोक्तृत्वचेतनत्वाद्यनुभवे हेतुरुच्यते ॥ २० ॥

एतदेव विवृणोति—

पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

प्रकृतिस्थः प्रकृतिपरतन्त्रः पुरुषः देही, प्रकृतिजान् गुणान् सुखदुःखमोहान्, भुङ्क्ते, अनुभवति । अस्य परतन्त्रस्य पुंसः गुणेषु सुखादिषु सङ्गः सद्यसद्योनिजन्मसु कारणम् । अथ च षोडशेऽध्याये, अभयं सत्त्वसंशुद्धिरित्यादि( श्लो० १ प्रभृति )वक्ष्यमाणेषु प्रकृतीनां गुणेषु सङ्गः । सत्यो दैव्यः, असत्य आसुर्यः, योनयः तासु यानि जन्मानि तेषु कारणमस्ति ॥ २१ ॥

यदास्य प्रकृतिपरतन्त्रता न भवेत्, तदा स्वरूपं प्राप्नोतीत्याह—

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २२ ॥

अस्मिन्नेव देहे परः, प्रकृतेः पृथग्भूतः, पुरुषः उपद्रष्टा साक्षिवत् प्रकृतिगुणैरलिप्तः । अनुमन्ता अन्तर्यामितयानुमन्ता च जडानां प्रेरयितापि भर्ता धारयिता पोषयिता च । भोक्ता तत् कर्मानुभवन् । महान् व्यापकः ईश्वरः प्रवृत्तिनिवृत्तिषु समर्थः । परमात्मेति चाप्युक्तः बन्धनान्मुक्तः, परमात्मैव योगिभिः प्रोक्तः । अथ चास्मिन् देहे परः पुरुषः परमेश्वरः । उपद्रष्टा क्षेत्रज्ञकृतानां कर्मणामुपद्रष्टा अनुमन्ता, तत्कर्मफलप्रापक इत्यादिः सुगमोऽर्थः ॥ २२ ॥

---

१ 'उपदेष्टा' इति गोण्डलपाठः, क्वचिदन्यत्रापि काश्मीरमातृकान्तरे ।
२ 'कर्ता' इति गोण्डलकलकत्तामातृकयोः पाठः ।

एतद्विचारस्य फलमाह--

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

एवं प्रकृतेः पारतन्त्र्येण पुरुषं संसरणशीलं पृथग्भावेन परमात्मरूपमेव यो वेत्ति । प्रकृतिं च गुणैः सहेति । प्रकृतिसंबद्धा एव ते गुणाः, न पुरुषसंबद्धा इति च यो जानाति । स प्रकृतिपुरुषतत्त्वज्ञः सर्वथास्मिन् देहे वर्तमानोऽपि भूयो नाभिजायते ॥ २३ ॥

अत्रोपायान्तरमाह—

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेण चापरे ॥ २४ ॥

केचित् ध्यानेन चित्तवृत्तिनिरोधाख्येन संयमेनात्मनि देहे स्वयमेवात्मनात्मानं पश्यन्ति, भूमिजययुक्त्या साक्षात् कुर्वन्ति । अन्ये सांख्येन योगेन प्रकृतिपुरुषविवेकेन, अपरे च कर्मयोगेण, ब्रह्मार्पणयुक्त्या ज्ञानकर्मसमुच्चययुक्त्या ॥ २४ ॥

एवं ब्रह्मज्ञानाधिकारिणां त्रैवर्ण्यानां दर्शनोपायमुक्त्वा तदनाधिकारिणां स्त्रीशूद्रादीनामप्याह--

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येवं मृत्युं श्रुतिपरायणाः ॥ २५ ॥

तु पुनः । अन्ये, स्त्रीशूद्रादयः । एवमुक्तप्रकारेणानधिकारादजानन्तः अन्येभ्यः श्रुत्वा—

श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ।

इत्यादिस्मरणात् । पुराणेतिहासविद्भ्यः परमात्मस्वरूपं श्रुत्वा, परमेश्वरमुपासते । ते स्त्रीशूद्रादयोऽपि च श्रुतिपरायणाः, यथा श्रुतार्थचिन्तनतत्पराः, एवं, ध्यानादिदर्शनवत्, मृत्युमतितरन्ति इति ॥ २५ ॥

सर्वमेव जगत् प्रकृतिपुरुषसंयोगजमिति दर्शयति—

---

१ चैव'' इति कलकत्तामातृकापाठः ।

**यावत् किंचित् संभवति[1] सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ २६ ॥**

सुगमोऽर्थः ॥ २६ ॥

एवं प्रकृतिपुरुषौ परीक्ष्य परमात्मानं परीक्षयति—

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥**

समं—'न मे द्वेष्योऽस्ति न प्रियः' (९।२९) इत्युक्त्या सर्वत्र पक्ष-
३ पातं विना कर्मानुरूपफलप्रापकम् ॥ २७ ॥

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥**

सर्वत्र, दैवसर्गे आसुरे वा, समं पक्षपातं विना समवस्थितमीश्वरं,
कृतानां शुभाशुभानां कर्मणामानुरूप्येण फलदातारं, पश्यन् ।
३ आत्मानमात्मना न हिनस्ति । अविहितकरणात् संसारे न पातयति ।
किं तु विहितकर्मकरणात् परामेव गतिं गमयतीत्यर्थः ॥ २८ ॥

**प्रकृत्यैव[2] हि कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥**

हि यस्मात्, प्रकृत्यैव दैवेनासुरेण वा स्वभावेन, पुरुषः शुभा-
शुभं कर्म कार्यते, तस्य तदनुगुणं गुणफलदायी परमेश्वरः, इति
३ सर्वशः, सर्वैः प्रकारैः, यः पश्यति विचारयति । स एवं विचारयन्
आत्मानमकर्तारं पश्यति । मयेदं बन्धकं कर्म न कर्तव्यमिति
निश्चिनोति ॥ २९ ॥

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

---

१ 'यावत् संजायते किंचित्' इति प्रचलितपाठः, गोण्डलमातृकायामपि दृश्यते ।

२ 'प्रकृत्यैव च' इति प्रचलितपाठः ।

भूतानां चराचराणां पृथग्भावं नानात्वमेकस्मिन्नेव परमेश्वरे तिष्ठतीत्यनुपश्यति। अन्ये ते जीवाः, नानाकाराः नानास्वभावाः
३ स्वभावानुरूपं नानाकर्म कुर्वाणाः, प्रलये त्वेकस्मिन्नेव परमेश्वरे संकुचितस्वरूपास्तिष्ठन्तीति विचारयति। च पुनः, सर्गादौ, तत एव परमेश्वरप्रेरिताः, प्राक्कर्मानुरूपमाकारस्वभावादिनानात्वं प्राप्नुवन्ति।
६ इत्येतत्परमार्थज्ञानतत्परो यदा भवति तदैतत् परमेश्वरतत्त्वज्ञान-माहात्म्याद् ब्रह्म संपद्यते, इति फलस्तुतिः ॥ ३० ॥

अनादित्वान्निर्गुणत्वात्[1] परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

आदिमान् हि महदादिः सगुणो व्ययेन विकारेण च सहितो भवति। अयमीश्वरस्त्वनीदृशः। क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु
३ इति (१३।२) उक्त्वा शरीरस्थोऽप्यन्तर्यामितया तत्तत्कर्मदर्शनाय तेषु तेषु शरीरेषु वर्तमानोऽपि परमेश्वरो न करोति न लिप्यते। निर्णीतं चैतत्—न च मां तानि कर्माणि निबध्नन्तीति नवमे(श्लो० ९)॥ ३१ ॥

निर्लेपत्वमीश्वरस्य दर्शयति—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

सर्वत्र देहे सर्वेषु देहेष्वन्तर्यामितया स्थित आत्मा परमेश्वरो नोप-
३ लिप्यते ॥ ३२ ॥

एवं परमेश्वरलक्षणं परीक्ष्याध्यायार्थोपसंहाराय क्षेत्रक्षेत्रज्ञयोरेव लक्षणं विवेचयति—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥

३ क्षेत्री, क्षेत्रज्ञः जीवात्मा, कृत्स्नं क्षेत्रं, सर्वमेव शरीरं अचेतनं, प्रकाशयति। तत्कार्यकरणाय चेतनावदिव करोति ॥ ३३ ॥

---

१ 'निर्मलत्वात्' इति गोण्डलमातृकायां पाठः।

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं भूतादिविकारोत्पत्तिक्षेत्रं, भूतप्रकृतिः, शरीरत्वेन परिणता, तस्याः सकाशान्मोक्षं च ये विदुस्ते परमात्मानं यान्ति ॥ ३४ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
त्रयोदशोऽध्यायः ॥ १३ ॥

## ॥ चतुर्दशोऽध्यायः ॥

ॐ श्रीशारदायै नमः ॥ एवं क्षेत्रक्षेत्रज्ञयोर्लक्षणं परीक्ष्य प्रकृतिगुणलक्षणपरीक्षामारभमाणो—

श्रीभगवानुवाच ।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमुपागताः ॥ १ ॥

ज्ञानानां प्रोक्तानां चातुरात्म्यज्ञानानां मध्यादुत्तमम् । वक्ष्यमाणमिदं ज्ञानं विना तेषां प्रतिपत्तिदार्ढ्योभावात् ॥ १ ॥

एतदेव स्तौति—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि न प्रजायन्ते प्रलये न व्यथन्ति ते ॥ २ ॥

॥ २ ॥

इदं वक्ष्यमाणं ज्ञानमेवाह—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

महद्ब्रह्म सूक्ष्मस्य परब्रह्मणोऽपेक्षया महत् स्थूलं मत्स्वरूपमेव ब्रह्म, स्वकार्याणां बृंहकं भूतप्रकृतिः । मम जगतां कर्तुरीश्वरस्य नीरूपस्य वा योनिः, बीजानामधिकरणं गर्भाधानक्षेत्रं, भवति । तस्मिन् प्रकृत्याख्ये महति ब्रह्मणि गर्भं निजमंशं जीवं धारयामि । ततः भोक्तृभोग्यसंयोगाद्भूतानां चराचराणां संभवो भवति ॥ ३ ॥

---

१ 'व्यथन्ति च' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र । 'व्ययन्ति च' इति रामकविपाठः ।

२ 'ददाम्यहम्' इति प्रायः काश्मीरपाठः, गोण्डलमातृकावर्जम् ।

एतदेव लक्ष्यति—

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

सर्वयोनिषु, ब्रह्मादिस्थावरान्तेषु देवमनुष्यतिर्यगादिषु । मूर्तयः शरीरे-
३ न्द्रियादिसंघातलक्षणाः । यथा हि स्त्रीषु क्षेत्रेषु पुरुषः सतन्त्यै बीजं दधत् स्वरूपान्न प्रच्यवते, तथा अहं महद्ब्रह्मणि दधदपि स्वरूपादप्रच्युत एवेत्यर्थः ॥ ४ ॥

इदानीं गुणानां बन्धमोक्षहेतूनां लक्षणपरीक्षामाह—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

सत्त्वादयो गुणाः, शरीराकारेण परिणतायाः प्रकृतेः प्रादुर्भूताः, देहिनं
३ गर्भरूपेणानुप्रविष्टं जीवमव्ययमविनाशिनं निबध्नन्ति, वक्ष्यमाणेन प्रकारेण स्वरूपावरणात् परवशीकुर्वन्ति ॥ ५ ॥

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥

३ इत्युक्तेन वृत्तेन गुणानां बन्धकत्वमाह—

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥

अनामयं, सुखात्मकम् । प्रकाशकत्वादहं जानामीत्यहंकारो ज्ञानसङ्गः । सत्त्वं ताभ्यां बध्नाति इत्यन्वयः ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

रागात्मकं विषयाभिलाषरूपम् । अप्राप्तप्राप्तीच्छा तृष्णा । आसङ्गः, प्राप्तस्य रक्षणे यत्नः । तयोः समुद्भवमुत्पादकम् । कर्मसङ्गेन प्रवर्त-
३ कत्वान्नियतकार्यकर्तृत्वाभिमाने बध्नाति ॥ ७ ॥

---

१ सांख्यकारिका, १२ ।

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८॥

मोहनं भ्रान्तिजनकम्। प्राप्तस्यावश्यकरणीयस्याकरणं प्रमादः। करणसामर्थ्येऽप्यनुत्साह आलस्यम् ॥ ८॥

एतदेव प्रकटमाह—

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९॥

सञ्जयति, सङ्गं कारयति, प्रमादे इत्यालस्यनिद्रयोरप्युपलक्षणम् ॥ ९॥

एतेषामन्योन्याभिभवं लक्षयति—

रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते[1]।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १०॥

स्पष्टोऽन्वयः ॥ १०॥

एतेषां वृद्धिलक्षणमाह—

सर्वद्वारेषु देहेऽस्मिन् प्रकाश[2] उपजायते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११॥

सर्वेषु द्वारेष्विन्द्रियेषु प्रकाशः स्फुटं निःसंदेहे व्यवसायः, एतज्ज्ञानं,
३ शब्दादिसंवेदनम् ॥ ११॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा[3]।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ[4] ॥ १२॥

इदं लब्धमिदमिदानीं लभ्यमित्यभिलाषातिशयो लोभः ॥ १२॥

---

१ 'भवति भारत' इति प्रचलितपाठः, कलकत्तामातृकापाठश्च।

२ 'प्रकाशम्' इत्यभिनवगुप्तपाठः।

३ 'ॱणामशमश्च तृट्' इति रामकण्ठ्यभिनवगुप्तयोः पाठः। 'ॱणो मनसः स्पृहा' इति कलकत्तामातृकापाठः।

४ 'कुरुनन्दन' इति गोण्डलमातृकापाठः, प्रायः दृष्टिभ्रमजन्यः।

अप्रकाशो प्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

सत्यपि वस्तुप्रकाशे शास्त्रादौ तदनालोचनमप्रकाशः । मोहो विपरीतज्ञानम् ॥ १३ ॥

विवृद्धानामेषां मरणसमये फलमाह—

यदा सत्त्वे विवृद्धे[1] तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

उत्तमविदामुत्तमज्ञानिनां लोकान् सत्यलोकादीन् ॥ १४ ॥

रजसि प्रलयं गत्वा जायते[2] कर्मसङ्गिषु ।
तथा प्रलीनस्तमसि[3] मूढयोनिषु जायते ॥ १५ ॥

रजसि प्रवृद्धे मृत्वा कर्मसङ्गेषु मनुष्येषु । मूढयोनिषु पशुसरीसृपादिषु ॥ १५ ॥

स्वकर्मानुरूपं सत्त्वादिवृद्धौ फलमाह—

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सुकृतस्य, यथाशास्त्रविहितस्य कर्मणः, फलं सत्त्ववृद्धौ निर्मलं कैवल्यप्रापकम् । तु पुनः, रजसः वृद्धौ फलकामनया क्रियमाणस्य कर्मणः फलं दुःखं, विनश्वरत्वादायासबाहुल्याद्वा । तमसो वृद्धौ क्रियमाणस्य कर्मणः फलमज्ञानं, विपरीतज्ञानं तत्कृतं नरकपातादिकमित्यर्थः ॥ १६ ॥

---

१ 'प्रवृद्धे' इति प्रचलितपाठः, गोण्डलमातृकायां दृश्यते ।

२ 'कर्मसङ्गिषु जायते' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र । 'कर्मसङ्गेषु' इति टीकायामुध्दृतः पाठः ।

३ 'तमसि लीनस्तु' इति गोण्डलमातृकापाठः ।

एतदेव सिद्धान्तोक्त्याह—

सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ जायेते[1] तमसोऽज्ञानमेव च॥१७॥
ऊर्ध्वं गच्छन्ति सत्त्वस्था[2] मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥१८॥

अत्र विस्तरोऽपरार्के याज्ञवल्क्यः[3]—

आत्मज्ञः शौचवान् दान्तः तपस्वी विजितेन्द्रियः।
धर्मकृद्वेदविद्याति सात्त्विको देवयोनिताम्॥
रजसा तमसा चैव समाविष्टो भ्रमन्निह।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते॥

तथा च मनुः[4]।

तत्र यत् प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत्।
प्रभातमिव शुद्धाभं सत्त्वं तदुपधारयेत्।

तथा।

वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः।
धर्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम्॥
तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते।
सत्त्वस्य लक्षणं धर्मः श्रेयसे तद्यथोत्तरम्॥
तापसा यतयो विप्रा ये च वैमानिका गणाः।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः॥
यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः॥

---

१ 'तमसो भवतो°' इति प्रचलितपाठः। 'जायेतां तमसो°' इति कलकत्ता-मातृकापाठः।

२ 'सत्त्वेन' इति गोण्डलमातृकायाम्।

३ याज्ञवल्क्यस्मृति, ३।१३६, १३९।

४ मनुस्मृति, १२।२७; १२।३१, ३८, ४८–५०; याज्ञवल्क्यस्मृति, ३।१३७; मनुस्मृति, १२।४५–४७।

ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥
असत्कार्यरतो धीर आरम्भी विषयी च यः ।
स राजसो मनुष्येषु पुनर्जन्माधिगच्छति ॥
झल्ला मल्ला नटाश्चैव पुरुषाश्च कुवृत्तयः ।
द्यूतपानप्रसक्ताश्च प्रथमा राजसी गतिः ॥
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ।
दानयुद्धप्रधानाश्च द्वितीया राजसी गतिः ॥
गन्धर्वा गुह्यकाश्चैव विविधा भूचराश्च ये ।
तथैवाप्सरसः सर्वा राजसेषूत्तमा गतिः ॥

तामसलक्षणमाह—

निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।
प्रमादवान् भिन्नवृत्तो भवेत्तिर्यक्षु तामसः ॥
स्थावराः क्रिमिकीटाश्च मत्स्याः सर्पाः सरीसृपाः ।
पशवश्च सृगालाश्च जघन्या तामसी गतिः ॥
हस्तिनश्च तुरंगाश्च शूद्रा म्लेच्छा विगर्हिताः ।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥
चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ।
रक्षांसि च पिशाचाश्च तामसेषूत्तमा गतिः ॥
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥

वाचिकान्याह—

पुरुषोऽनृतवादी च पिशुनः पुरुषस्तथा ।
अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥

---

१ याज्ञवल्क्यस्मृति, ३।१३८; मनुस्मृति, १२।४२-४४; १२।९; १२।५।

२ या० स्मृ०, ३।१३४

अनिबद्धप्रलापी, पुराणादिविद्यास्थान[प्रसिद्धविरुद्धा]भिधायी ।
मनुः ( १२।६ )—

पारुष्यमनृतं चैव पैशुन्यमपि सर्वतः ।
अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥

कायिकान्याह—

अत्यन्तादाननिरतः परदारोपसेवकः ।
हिंसकश्चाविधानेन स्थावरेषूपजायते ॥

अत्यन्तादानं [ ? अदत्तादानं ] चौर्यम् ।

यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात् ॥
शरीरेण हि शारीरं वाङ्मयेन हि वाङ्मयम् ।
मानसं मनसा चैव स्वकर्मफलमश्नुते ॥

इति ॥ १७ ॥ १८ ॥

गुणबन्धान्मोक्षोपायनमाह—

**गुणानेतानतीत्य त्रीन् देहे देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ १९ ॥**

स्फुटोऽर्थः ॥ १९ ॥

अमुमेवार्थं लक्षयति—

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ २० ॥**

उक्तप्रकारेण सुखदुःखमोहजनका गुणा एव संसारबन्धकाः, नान्यः कश्चिदिति द्रष्टा, विचारको, यदा पश्यति, विचारयति । गुणेभ्यश्च कार्यकारणयोरभेदाद्गुणकार्येभ्यः सुखादिभ्यः परं सुखाद्यनासक्तम् आत्मानं वेत्ति । स मद्भावं मत्सायुज्यमधिगच्छति ॥ २० ॥

---

१ या० स्मृ०, ३ । १३५ । तत्र तु 'अदत्तादान०' इति पाठः, तथा मनुस्मृतौ ( १२ । ७ ) च ।

गुणातीततत्त्वं विशेषतः जिज्ञासुः —

अर्जुन उवाच ।

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥**

॥ २१ ॥

अत्रोत्तरं--

श्रीभगवानुवाच ।

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि संप्रवृत्तानि निवृत्तानि न[1] काङ्क्षति ॥ २२ ॥**

एतत् गुणातीतलिङ्गमित्यर्थः ॥ २२ ॥

किमाचार इत्याह--

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्ते इत्येव यो ज्ञः[2] तिष्ठति नेङ्गते ॥ २३ ॥**

उदासीनवत् तटस्थ इवासीनः स्थितः, यो गुणैः प्रवृत्तैर्वा निवृत्तैर्वा न विचाल्यते, विकारं न प्राप्यते । यः, गुणा वर्तन्त इत्येव ज्ञः, अयं प्रकाशादिर्गुणानामेव स्वभावो, मम तु न किंचिदेभिरिति जानंस्तिष्ठति, स्वात्मन्येव स्थितिं भजते । नेङ्गते, एतेषां प्रवृत्तौ वा निवृत्तौ वा न चेष्टते, इति गुणातीतस्याचारः ॥ २३ ॥

**समदुःखसुखस्वः[3] समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥**

---

१ 'न निवृत्तानि' इति पाठः प्रायः सर्वत्र ।

२ 'योऽवतिष्ठति' इति प्रचलितपाठः । अभिनवगुप्तः काश्मीरपाठे विकल्पेन 'ज्ञः' तथा 'अज्ञः' इति द्विविधं पदच्छेदं करोति ।

३ '॰सुखः स्वस्थः' इति प्रचलितपाठः ।

मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भफलत्यागी गुणातीतः स उच्यते ॥ २५ ॥

प्रियं मनोज्ञं, अप्रियममनोज्ञं। मानः पूजा, अवमानः परिभवः। आरभ्यन्त इत्यारम्भा यज्ञादिकर्माणि, तेषां फलत्यागी ॥ २४ ॥ २५ ॥

एतदयनोपायमाह—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैनान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

अव्यभिचारेण परमेश्वरं त्यक्त्वान्यस्येन्द्रादेस्तत्तत्फलकामनया यजनं, व्यभिचारः। तच्छून्येन मदेकालम्बनेन भक्तियोगेन मां सेवते। स ब्रह्मीभावाय मत्सायुज्याय, कल्पते समर्थो भवति ॥ २६ ॥

अत्र हेतुमाह—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

हि यस्मादव्ययस्यामृतस्य जन्मादिविकारहीनस्य ब्रह्मणः प्रतिष्ठाहम्। ईदृशो ब्रह्मशब्दार्थो मय्येव प्रतिष्ठितः। शाश्वतस्य शाश्वतपदप्राप्तिहेतोर्धर्मस्य, विहितकर्मानुष्ठानरूपस्य, अहमेव प्रतिष्ठा, तज्जनितादृष्टाधिष्ठाता। ऐकान्तिकस्य सांसारिकदुःखैरमिश्रितस्य सुखस्य, दुःखात्यन्ताभावे परमानन्दस्य, मोक्षस्य, दातेति सिद्धम् ॥ २७ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ चतुर्दशोऽध्यायः समाप्तः ॥ १४ ॥

---

१ 'मानापमान॰' इति प्रचलितपाठः।

२ '॰परित्यागी' इति प्रचलितपाठः।

३ '॰त्यैतान्' इति पाठः प्रायः सर्वत्रान्यत्र।

## ॥ पञ्चदशोऽध्यायः ॥

श्रीपुरुषोत्तमाय नमः ॥ पूर्वाध्यायान्ते ह्यैकान्तिकस्य सुखस्य प्रतिष्ठाहमिति यदुक्तं, तत् सुखं संसारोच्छेदादेव सुलभमिति, तदुच्छेदाय क्षेत्रक्षेत्रज्ञसंयोगात्मके संसारेऽश्वत्थवृक्षतामारोपयन्—

श्रीभगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

उज्जिहीते, प्रथममेवोद्गच्छति, कालप्रेरिता विश्वकरणायेति व्युत्पत्त्या परापररूपा पुरुषप्रकृतिसंज्ञा पारमेश्वरी शक्तिः, प्रधानतत्त्वं, मूलं यस्य तम् । तथाधः, प्रकृतेरर्वाचीनाः शाखाः, शेते पुष्पपत्रादिकमत्रेति व्युत्पत्त्या प्रसवधर्मिण्यः महदादयः सप्तप्रकृतिविकृतयो, यस्य तम् । अश्वत्थं, न श्वस्तिष्ठतीति व्युत्पत्त्यपेक्षया नानात्वेन परिणामात्मविकारं संसारधर्माय सर्गम् । अव्ययं, व्ययः प्रतिनिवर्तनं तद्धीनं सदा संसरणशीलं, कपिलादय आहुः । यस्य संसाराश्वत्थस्य छन्दांसि वेदाः, तत्त्वाध्यवसायलक्षणायाः महत्तत्त्वपर्यायाया बुद्धेः धर्माः, धर्माधर्मज्ञानाज्ञानविरागाविरागैश्वर्यानैश्वर्यरूपाः, पत्राणि पुष्पफलरूपाणां विषयाणां कारणानि भोगस्थानानि च भवन्ति । तमीदृशं संसाराश्वत्थं यो वेद स एव वेदार्थविदित्यर्थः ॥ १ ॥

अधश्चोर्ध्वं प्रसृतास्तस्य[1] शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

तस्येत्थंभूतस्य संसारवृक्षस्य शाखा, महदादयः सप्तप्रकृतिविकृतयः, गुणैः सत्त्वादिभिः प्रवृद्धाः—

---

१ 'प्रसृता यस्य' इति प्रायः काश्मीरपाठः ।

सात्त्विक एकादशकः प्रवर्तते वैकृतादहंकारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥

इत्युपदिष्टक्रमेणेन्द्रियगणैकादशकास्तन्मात्रभेदेन विकारविशेषं प्राप्ताः। तथा विषयप्रवालाः, विषयाः स्थूलाः शब्दादय एव प्रवालाः पल्लवाः शाखापत्त्रयोः पर्वरूपाः, भोगापवर्गयोः पुरुषार्थयोः पुष्पफलयोरुद्गमन-स्थानानि, यासां ताः। अधश्चोर्ध्वं प्रसृताः। परस्परं प्रकृतित्वेन विस्तारं गताः। तथा हि, महत्तत्त्वं प्रधानविकृतित्वेनाधोगतमप्यहंकार प्रकृतित्वेनोर्ध्वं गतम्। एवमहंकारस्य महत्तत्त्वापेक्षयाधोगतत्वेऽपि तन्मात्रेन्द्रियापेक्षयोर्ध्वगतत्वम्। तन्मात्राणां चाहंकारापेक्षयाधोगत-त्वम्, भूतापेक्षयोर्ध्वगतत्वम्। च पुनः, मूलानि, पुरुषाधिष्ठिता अष्टावेव प्रकृतयः, संभूय चतुर्विंशत्तत्वरूपेण व्यक्ततां प्राप्ताः, तासां समुदायरूपाणि सांख्यप्रसिद्धानि लिङ्गानि, सूक्ष्मशरीरसंज्ञकानि, कर्मानुबन्धीनि, पुण्यापुण्यस्य कर्मणोऽनुपातीनि मनुष्यलोके इत्युप-लक्षणात्, तासु तासु भोगभूमिषु, अधश्चानुसंततानि संसृतानि, चकारादूर्ध्वमपि। तथा चोक्तम्[2]—

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥

पूर्वोत्पन्नमादिसर्गे तत्त्वोत्पत्तिसमनन्तरमुत्पन्नम्। असक्तं सूक्ष्मत्वात् पाषाणमप्यनुप्रविशति।

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥

वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ॥

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिष्पत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्तते सर्गः ॥

---

१ सांख्यकारिका, २५।

२ सांख्यकारिका, ४०।

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालः ब्रह्मादिस्तम्बपर्यन्तः ॥

इति ॥ २ ॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण शितेन छित्त्वा ॥ ३ ॥

अस्य संसारस्य विश्वस्यैवाश्वत्थस्य सत्त्वादिभिर्गुणैः प्रवृद्धस्य तथैकान्तिकेन नियमेनेह क्वचिदेकरूपं केवलं सात्त्विकं राजसिकं तामसिकं वा नोपलभ्यते । सर्वेषां गुणानां संभूयैव कार्यारम्भकत्वशक्तेर्विश्ववैचित्र्यस्याविनिर्भागात् । अत एव मिलित्वैव गुणानां कार्यारम्भकत्वेऽपि नान्तः, विश्वस्य कार्यवर्गस्यैकत्रान्ते नियमनात् तामसिकत्वमिति संसाराश्वत्थस्यान्तः, तामसिकत्वेन समाप्तिर्नास्ति । न चादिः प्रथममुत्पत्त्यारम्भे सत्त्वमेव हि रजस्तमसोः कार्याणामुत्पत्तये प्रकाशकगुणकार्यस्यास्य संसाराश्वत्थस्य प्रथमावस्था सात्त्विक्येवेत्यपि नास्ति । न च संप्रतिष्ठा प्रवृत्तिरूपा । रज एव हि सत्त्वतमसोः स्वकार्यसंपत्तये प्रकाशेन नियमेन वा प्रवृत्तिं कारयतीति विश्वस्य मध्यावस्था राजसिकीत्येतदपि नास्ति । अत्रायं तात्पर्यार्थः । यद्यपि सत्त्वरजस्तमांस्येव विश्वकार्यकरणानि । शब्दादौ कार्ये हि श्रवणादेः करणस्य सत्त्वं प्रकाशं करोति । तदनु तत्संपत्त्यर्थं रजः प्रवर्तयति । पुनस्तत्रैव तमो नियमयतीति । प्रथमं प्रकाशः, तदनु प्रवृत्तिः, ततो नियम इति क्रमो नास्ति । व्युत्क्रमेणापि दृष्टेः । तथा ह्यदृष्टवशात् क्वचिद्विषये प्रथममेव तमसावरकेण नियमितस्य तदनु सत्त्वं तत्रैव सुखं

---

१ सांख्यकारिका, ४४, ४५, ५२, ५३, ५४।
२ 'सुविरूढ॰' इति पाठः प्रायः सर्वत्रान्यत्र ।
३ 'दृढेन' इति प्रचलितपाठः ।

प्रकाशयति, ततो रजः प्रवर्तयति । एवमेवादृष्टवशाद्रजसा प्रथममेव प्रवर्तितस्य तदनु प्रकाशनियमादृष्टौ गुणानामन्योन्याभिभवाश्रयजननमिथुनवृत्तिवैचित्र्येण विश्ववैचित्रस्याविनिर्भोगात् । तथा च स्मृतं पुराणे—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥
नैषामादिश्च संयोगो वियोगो वोपलभ्यते ।

तथा चेत्थं लक्षितमेव पूर्वस्मिन्नध्याये स्वयं भगवता—

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥
सत्त्वं लघु प्रकाशक[मिष्ट]मुपष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥
धर्मेणगमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥[1]

इत्यादि सांख्यप्रामाण्योपपादकं पूर्वाध्याये सत्त्वं रजस्तम (१४।५) इत्यारभ्योर्ध्वं गच्छन्ति सत्त्वस्था (१४।१७) इत्यन्तम् । एनमित्थंभूतं अश्वत्थं, संसारवृक्षं, सुविरूढानि, प्रागुक्तनीत्या धर्माधर्मादिहेतुकतया तासु तासु भोगभूमिषु ऊर्ध्वाधोगामितया अनवरतं प्ररोहैर्विस्तारं प्राप्तानि, मूलानि लिङ्गाख्यानि सूक्ष्मशरीराणि, तदनुप्रविष्टानि स्थूलशरीराणि च, यस्य ईदृशमश्वत्थं संसारवृक्षं शितेन, योगाभ्यासादिसमुत्तेजितेन, असङ्गो वैराग्यमेव शस्त्रं तेन छित्वा—

अजां ह्येकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥[2]

इत्यादिश्रुत्यवेक्षया विवेकख्यात्या प्रकृतिपुरुषौ पृथग्विभाव्य इति यावत् ॥ ३ ॥

---

१ सांख्यकारिका, १२।१३।४४।

२ श्वेताश्वतर, ४।५।

ततः पर[1]ं तत् परिमार्गितव्यं
यस्मिन् ग[2]तो न निवर्तेत भूयः ।
तमेव चाद्यं पुरुषं प्र[3]पद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

ततः परं तत् परिमार्गितव्यं यस्मिन् गतो न निर्वेतत भूयः, इति केवल्यप्राप्त्युपदेशः। तथा चोक्तं योगानु[4]शासने—दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। इति। अस्यार्थः। स्त्र्यन्नपानैश्वर्यादिवितृष्णदृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वाद्यानुश्रविकविषयवितृष्णस्य दिव्यादिव्यविषयसंप्रयोगेऽपि विषयदोषदर्शिनश्चित्तस्य प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम्। तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्[5]। अस्यार्थः। दृष्टानुश्रविकविषयदोषदर्शी पुरुषोऽभ्यासात् तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मेभ्यो विरक्त इति तद्द्वयं वैराग्यम्। तत्र यदुत्तरं तज्ज्ञानप्रसादनमात्रं यस्योदये प्रत्युदितख्यातिरेवं मन्यते—प्राप्तं प्राप्यं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसंक्रमो, यस्याविच्छेदाज्जनित्वा म्रियते, मृत्वा च जायते इति। ज्ञानस्यैव पराकाष्ठा वैराग्यम्। एतस्यैव नान्तरीयकं कैवल्यमिति॥ पुराणी प्रवृत्तिः पूर्वोत्पन्नं समर्थमितीत्थं विवेचितमादिसर्गात् प्रभृति लिङ्गस्य संसरणं यतो यस्मात् पुरुषात् प्रसृता विस्तारं प्राप्ता तमेवाद्यं पुरुषं पुरुषोत्तमं परमात्मस्वरूपं, अहमात्मा प्रपद्ये, तेन सहैकीभवामीति ॥ ४ ॥

---

१ 'पदं' इति प्रचलितपाठः
२ 'गता न निवर्तन्ति' इति प्रचलितपाठः।
३ 'प्रपद्येत्' इति रामकविपाठः, अभिनवगुप्तपाठश्च।
४ योगसूत्रम्, १।१५। तथा तदुपरि व्यासभाष्यं च।
५ तदेव १।१६।

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या[1] विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

मानो गर्वः, मोहोऽनात्मन्यात्मज्ञानं, ताभ्यां निर्गतः, अत एव जितः, सङ्गस्य पुत्रवित्ताद्यासक्तेः दोषो यैः । अध्यात्मनित्याः सदा परमात्मज्ञानैकनिष्ठाः । विनिवृत्ता ज्ञानाभ्यासाद्विच्छिन्नाः कामा विषयस्पृहा येषाम् । अमूढाः, सत्त्वोद्रेकादभिभूतरजस्तमसः, तदव्ययं पदं परमेश्वरसायुज्यं गच्छन्ति ॥ ५ ॥

तत् पदं लक्षयति—

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

अयं परमात्मा हि सूर्यादीनां भासकः, न तु तैरयं भास्यते । यथा दीपैः सूर्योदय इत्यर्थः ॥ ६ ॥

ये तु निवर्तन्ते तान् लक्षयति—

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

ममैवांशः, यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीति श्रुत्यै[2]र्थानुगमादभिन्नोऽपि परमात्मनः भूतेन्द्रियादिसंघातोपाधिना भेदं प्राप्य, जीवलोके जीवभूतः सनातनः, सदेकरूपः, प्रकृतौ क्षेत्रे स्थितानि अन्तःकरणानि बुद्धीन्द्रियाणि च कर्षति, निजकर्मफलभोगाय देहाद्देहान्तरं प्रापयति, विषयभोगार्थं प्रेरयति च ॥ ७ ॥

---

१ "निष्ठा' इति गोण्डलमातृकापाठः, क्वचिदन्यत्रापि ।

२ बृहदारण्यक, २ । १ । २० ।

एतदेव प्रतिपादयति—

शरीरं यदवाप्नोति यच्चाप्युत्क्रमतेश्वरः[1] ।
गृहीत्वैतानि[2] संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

आशयात् पुष्पादेरधिष्ठानात् ईश्वरः, बाह्याभ्यन्तरकरणाकर्षणसमर्थः । विस्तरस्त्वत्र शास्त्रादवगन्तव्यः ॥ ८ ॥

करणान्येव दर्शयति—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

अयं क्षेत्रज्ञः श्रोत्रादिद्वारेण शब्दादीन् भुङ्क्ते इत्यर्थः ॥ ९ ॥

तिष्ठन्तमुत्क्रमन्तं[3] वा भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

तिष्ठन्तमस्मिन्नेव शरीरे वर्तमानमुत्क्रामन्तमिदं शरीरं त्यक्त्वा शरीरान्तरं गच्छन्तं, गुणान्वितं गुणानां सत्त्वादीनां अन्वितं, कार्यकारणत्वेन समवेतं, फलं सुखदुःखमोहात्मकमिह परत्र च भुञ्जानं विमूढास्तमसान्धा नानुपश्यन्ति । ज्ञानचक्षुषः पश्यन्ति । यावन्नायं विमुच्यते तावदेष क्षेत्रज्ञः, यथा तृणजलायुका तृणस्याश्रितपूर्वस्यान्तं गत्वान्यत् तृणं श्रयति, तथास्मिन् देहे विषयानुपभुज्यावशिष्टकर्मफलभोगार्थं देहान्तरं श्रयतीति साक्षात्कुर्वन्ति ॥ १० ॥

अत्रोपायमाह—

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

योगिनो, योगाभ्यासेन समाहितचेतसः, यतन्तः, श्रवणादियत्नपराः, एनमात्मानमात्मनि हृदयेऽवस्थितं पश्यन्ति । अकृतात्मानः, अना-

---

१ 'ऽप्युत्क्रामतीश्वरः' इति पाठस्तु प्रायः सर्वत्रान्यत्र ।

२ 'गृहीत्वा तानि' इति गाण्डलपाठः ।

३ 'उत्क्रामन्तं स्थितं वापि' इति प्रचलितपाठः, गोण्डलमातृकायां दृश्यते । 'तिष्ठन्तमुत्क्रामन्तं वा' इत्यपि क्वचित् ।

त्मज्ञाः, यतन्तोऽपि, यत्नपरा अपि, अचेतसः असमाहितचित्ताः, न पश्यन्ति ॥ ११ ॥

न तद्भासयते सूर्य इति यदुक्तं (श्लो० ६) तल्लक्षयति—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥१२॥

आदित्यगतं तेजः, यज्जगतां भासकं वृष्ट्यादिना धारकं च । चन्द्रगतं तेजो भासकमाप्यायकं च । अग्निगतं तेजः प्रकाशनदहनशोषणस्वेदनपाचनात्मकं च । यत् तदेतेषां मत्तेजोऽनुगमादित्यर्थः ॥ १२ ॥

एतदेव प्रकाशयति—

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

गां भूमिं, चशब्दाद्दिवं च, सूर्यो भूत्वाहमाविश्य ओजसा भूतानि दिव्यानि भौमानि च वृष्टिद्वारेण धारयामि । विस्तृतं चैतत् तृतीयेऽध्याये यज्ञप्रस्तावे—देवान् भावयतानेनेत्यादि, एवं प्रवर्तितं चक्रमित्यन्तम् (३ । ११–१६) । तथैवाहं रसात्मकः सोमो भूत्वा औषधीः प्राणिप्राणधारिकाः पुष्णामि ॥ १३ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः[1] ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

तथैव प्राणिनां देहमास्थितो वैश्वानरो जठराग्निर्भूत्वा प्राणापानसखो जठराग्निर्भूत्वा चतुर्विधमन्नमदनीयं, भक्ष्यं भोज्यं चोष्यं लेह्यं च, पचामि परिपाकं परिणामं नयामि ॥ १४ ॥

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव[2] चाहम् ॥ १५ ॥

---

१ '०माश्रितः' इति प्रचलितपाठः ।

२ '०द्वेदकृदेव' इति गोण्डलमातृकापाठः, तथा क्वचिदन्यत्रापि ।

सर्वस्य यस्य कस्यापि प्राणिनः हृदि चेतनाधिकरणे देशेऽहं परमेश्वर एवान्तर्यामितया जीवात्मतया संस्थितः क्षेत्रज्ञोऽपि परमेश्वरप्रेरित एव तत्तत्कार्यकर्ता । मत्तो मदधिष्ठानादेव स्मृतिः पूर्वानुभूतार्थस्मरणम्, योगिनां जन्मान्तरानुभूतार्थस्मरणमपि । ज्ञानं विषयेन्द्रियसंयोगादिज-प्रत्यक्षादिज्ञानं, योगिनां देशकालव्यवहितमपि । अपोहनमन्यथावृत्ति-र्गोत्वादश्वादीनामिव सारासारविवेकः आत्मानात्मविचारश्च । वेदैश्च सर्वैरहमेव वेद्यः, सर्वे वेदा मद्वेदनार्था एवेत्यर्थः । वेदान्तकृत्, वेदः ज्ञानकर्मकाण्डप्रतिपादकः शब्दराशिस्तस्यान्तः ब्रह्मैवेदं सर्वमित्यादि-निष्ठा, उपनिषद्भागः, तस्य कर्ता । वेदविदेव चाहमादिविद्वानितिलक्षण-लक्ष्यः, जीवरूपेण तदर्थज्ञाता, तदुक्तकर्मानुष्ठाता च ॥ १५ ॥

प्रकृतिपुरुषेश्वराणामन्योन्यवैलक्षण्यं लक्षयति यावदध्यायसमा-प्तिम्—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

लोके दृश्यमानेऽस्मिन् क्षेत्रे, क्षराक्षरत्वेन द्वाविमौ पुरुषौ पुरिशयन-व्युत्पत्तिसामान्यादेकत्र शरीरे संहतौ चेतनाचेतनौ पुरुषसंज्ञावित्यर्थः । तावेव लक्षयति । सर्वाणि भूतानि भूतप्रकृतिरूपाणि आकाशादिप्रधा-नान्तानि कार्यकारणत्वेनैकीभूय पुरिशयनात् क्षरन्ति प्रतिक्षणं विकारं गच्छन्तीति व्युत्पत्त्या पुरुषः क्षर उच्यते । द्वितीयस्तु जीवाख्यः । कूट-स्थो निर्विकारः अक्षरः, न क्षरति विरस्यति इति, सर्वं भूतवर्गमश्नुते, चैतन्येन व्याप्नोति, इत्यक्षर इति व्युत्पत्त्या च नित्यश्चेतनो व्यापकश्च पुरुषोऽक्षर उच्यते ॥ १६ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्ययमीश्वरः[१] ॥ १७ ॥

तु पुनः, ताभ्यां क्षराक्षराभ्यामन्यः स्वस्वरूपादप्रच्युतः, उत्तमः

---

१ "०त्यव्यय ईश्वरः" इति पाठः प्रायः सर्वत्र, क्वचित् रामकविटीकामातृ-कावर्जम् ।

सर्वोत्तीर्णः पुरुषः अन्तर्यामित्वेन पुरि शरीरे स्थितः, परमात्मेत्युदा-
३ हृतः। यो लोकत्रयं कृत्स्नमेव जगदाविश्यानुप्रविश्य बिभर्ति धारयति
पोषयति च। ईश्वरः कर्तुमकर्तुमन्यथाकर्तुं च समर्थः॥ १७॥

एतन्निर्वचनेनोपसंहरति—

यस्मात् क्षरमतीतोऽहमक्षरादपि[1] चोत्तमः।
अतोऽस्मिँल्लोके[2] वेदे च प्रथितः पुरुषोत्तमः॥ १८॥

क्षरं विनाशिनं क्षेत्राख्यं संसारवृक्षं च प्रागुक्तमतीतः, अक्षरात्
३ क्षेत्रज्ञात् संसरणशीलात् जीवादपि चोत्तमः। स्वयमसंसरणशीलः
क्षेत्रज्ञस्य तत्तत्कर्मफलदः। लोके वेदे च प्रथितः प्रसिद्धः पुरुषो-
त्तमः॥ १८॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत॥ १९॥

यः असंमूढः विशुद्धसत्त्वः, एवमध्यायोक्तार्थानुगमेन मां पुरुषो-
त्तमं जानाति। स सर्ववित् प्रकृतिपुरुषेश्वरतत्त्वज्ञः, मां परमेश्वरं
३ साकारत्वेन निराकारत्वेन च भजति॥ १९॥

अध्यायार्थं फलनिर्देशेनोपसंहरति—

इति गुह्यतमं शास्त्रमिदमुक्तं[3] मयानघ।
एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत॥ २०॥

इतीदं शास्त्रमेतदध्यायरूपं शासनं, गुह्यतमं प्रकृतिपुरुषेश्वरपरीक्षा-
३ क्रमेणातिरहस्यं, मयोक्तम्। एतद्बुध्वार्थतो ज्ञात्वा, बुद्धिमान् संप्राप्त-
परमार्थज्ञानः, अत एव कृतार्थश्च स्यात्॥ २०॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ पञ्चदशोऽध्यायः॥ १५॥

---

१ '॰मक्षरस्यापि' इति क्वचिद्रामकविटीकायां पाठः।
२ 'अतोऽस्मि लोके' इति प्रचलितपाठः।
३ 'शास्त्रं मया प्रोक्तं' इति प्रायः काश्मीरपाठः।

# ॥ षोडशोऽध्यायः ॥

श्रीशारदायै नमः ॥ श्रीगुरुभ्यो नमः ॥ ॐ अथ प्रथमलक्षितयोर्दैवासुरप्रकृत्योः परीक्षार्थम्——

श्रीभगवानुवाच ।

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥
अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम्[1] ।
दया भूतेष्वलौल्यं[2] च मार्दवं ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिस्तुष्टिरद्रोहो[3] नाभिमानिता[4] ।
भवन्ति[5] संपदं दैवीमभिजातस्य भारत ॥ ३ ॥

अभयं——

न बिभेति यदा चायं यदास्माच्च न विभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥

इति मोक्षधर्मेषु लक्षितम् । सत्त्वस्य प्रकाशकस्य परमार्थज्ञानहेतोः शुद्धिः, रजस्तमोभ्यां विमुक्तिः, सत्त्वसंशुद्धिः । अक्रोधः प्रतिघातरि क्रोधाभावः । अहिंसा प्राणिनामपीडनम् । सत्यं भूतहितम् । त्यागः कर्मफलेच्छाविरहः । असक्तिः विषयवैतृष्ण्यम् । अपैशुन्यं, परोक्षं परस्य दोषाविष्करणम् पैशुन्यं, तदभावः । तेजः यथा न परेऽभिभवेयुः । क्षमा परापराधसहनम् । धृतिः प्राप्तस्येन्द्रियक्षोभस्य

---

१ '°स्त्यागः शान्ति°' इति प्रचलितपाठः, गोण्डलमातृकायामुपलभ्यते ।

२ 'भूतेष्वलोलुप्त्वं' इति प्रचलितपाठः कलकत्तामातृकायां दृश्यते । 'भूतेष्वलौब्ध्यं' इति गोण्डलमातृकापाठः ।

३ 'धृतिः शौचम°' इति प्रचलितपाठः ।

४ 'नातिमानिता' इति प्रचलितपाठः, अभिनवगुप्तेनानुसृतः ।

५ 'भजन्ति' इति क्वचिद्रामकविमूलमातृकायाः पाठः । टीकायां तु 'भवन्ति' इत्येव दृश्यते ।

१२ निरोधः। तुष्टिः यथालाभं संतोषः। अद्रोहः परापचिकीर्षाया अभावः
॥ १ ॥ २ ॥ ३ ॥

अथासुरीमाह—

दम्भो दर्पोऽभिमानश्च[1] क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थसंपदमासुरीम् ॥ ४ ॥

आसुरीं सत्त्वाभिभवाद्रजस्तमसः समुद्रिक्ताम् । दम्भादयः पूर्वं
३ व्याख्याताः ॥ ४ ॥

एतयोः कार्यं विभजति—

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि भारत ॥ ५ ॥
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः[2] प्रोक्तो आसुरं पार्थ मे शृणु ॥ ६ ॥

भूतानां कर्मभूमौ जातानां पुरुषाणां सर्गौ प्रादुर्भावौ ॥ ५ ॥ ६ ॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

विहिते कर्मणि प्रवृत्तिं निषिद्धान्निवृत्तिम् ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतम[3]किंचित्कामहैतुकम् ॥ ८ ॥

असत्यं, प्रथमं नासीदिति सत्ताहीनं, अप्रतिष्ठं, यत्र उत्पन्नं तत्रैव
लीयते इत्युक्तया प्रतिष्ठया हीनम् । अत एवानीश्वरं मूलकारणशून्यम्।
३ अपरस्परसंभूतं, प्रकृतेर्महांस्ततोऽहंकार इति बीजाङ्कुरन्यायप्राप्तकार्य-

---

१ '॰ऽतिमानश्च' इति प्रचलितशाङ्करपाठः ।

२ 'विस्तरतः' इति प्रायः काश्मीरपाठः, गोण्डलमातृकावर्जम् ।

३ '॰तमकिंचित्कमहेतुकम्' इति प्रायः काश्मीरपाठः । 'तं किमन्यत् काम-
हैतुकम्' इति तु प्रचलितपाठः ।

कारणभावरहितम्। अकिंचित्कं, न विद्यते किंचित्स्वर्गनरकादि यस्य, परलोकहीनम्। धर्मेण गमनमूर्ध्वमित्यादियुक्तिरहितम् ॥ ८ ॥

**एतां बुद्धिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रवर्तन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ॥ ९ ॥**

सुगमम् ॥ ९ ॥

**काममाश्रित्य दुष्पूरं दम्भलोभमदाश्रिताः ।**
**असद्ग्रहाश्रिताः क्रूराः प्रचरन्त्यशुचिव्रताः ॥ १० ॥**

'यावज्जीवं सुखं जीवेत्'–इत्युक्त्या कामं विषयाभिलाषं, दुष्पूरं–तृष्णाखनिरगाधेयम्, इत्याद्युक्त्या पूरयितुमशक्यमाश्रित्य, दम्भाद्यै-
३ रुक्तलक्षणैरन्विताः। यत्किंचित् तदसत्, इत्यसतो ग्रहं हठमाश्रिताः। क्रूराः हिंस्राः ॥ १० ॥

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥**

चिन्तां धनार्जनविषयाम्। अपरिमेयां अनन्तां प्रलयान्तां मरणपर्यवसायिनीम्। एतावदिति जन्मनोऽस्यविषयभोगादन्यत् किमपि फलं
३ नास्तीति निश्चिताः ॥ ११ ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थानन्यायेनार्थसंचयान् ॥ १२ ॥**

---

१ सांख्यकारिका, ४४।

२ 'दृष्टिमवष्टभ्य' इति पाठः प्रायः सर्वत्रान्यत्र ।

३ 'प्रभवन्त्युग्र॰' इति प्रायः सर्वत्र पाठः

४ 'जगतोऽहिताः इति प्रचलितपाठः, गोण्डलमातृकायां दृश्यते ।

५ 'दम्भमान॰' इति प्रचलितपाठः, गोण्डलमातृकायां दृश्यते ।

६ 'मोहाद्गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः' इति प्रचलितपाठः ।

७ '॰भोगार्थमन्या॰' इति प्रचलितपाठः । '॰लोभार्थमन्या॰' इति गोण्डलमातृकापाठः ।

८ '॰संचयम्' इति कलकत्तामातृकापाठः ।

अन्यायेन, शास्त्रोक्तवृत्तिप्रकारं परित्यज्य, कामानां विषयाणामुपभोगाय धनसंचयानीहन्तेऽर्जयितुं चेष्टन्ते इत्यर्थः ॥ १२ ॥

एतदेव विस्तरयति—

इदमद्य मया लब्धमिदं प्राप्स्ये मनोगतम्[1] ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोहऽमहं भोगी[2] सिद्धोऽहं बलवान् सुखी ॥ १४ ॥

सिद्धः संपत्त्यादिना संपूर्णमनोरथः ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः ॥ १५ ॥

आढ्यो धनवान् । अभिजनवान् कुलीनः बन्धुपरिवारयुक्तश्च ॥ १५ ॥

अनेकचित्ता[3] विभ्रान्ता मोहस्यैव[4] वशं गताः ।
प्रसक्ताः कामभोगेषु पतन्ति निरयेऽ[5]शुचौ ॥ १६ ॥

अशुचौ अत्यन्तामेध्ये निरये नरके गर्भवासे च ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

आत्मसंभाविताः अस्माभिर्यदुक्तं तदेव प्रमाणमित्यहंकारिणः। अत एव स्तब्धाः परस्मिन्नुपदेष्टरि न प्रणताः। यजन्ते नाम। नामेत्यली-

---

१ '॰मिदं प्राप्स्ये मनोरथम्' इति प्रचलितपाठः। '॰मिमं प्राप्स्ये मनोरथम्' इति प्रायः काश्मीरपाठस्तथान्यत्रापि।

२ 'योगी' इति गोण्डलमातृकापाठः।

३ '॰चित्तविभ्रान्ता' इति प्रचलितपाठः।

४ 'मोहजालसमावृताः' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते।

५ 'नरके' इति प्रचलितपाठः।

३ कार्थमन्ययम् । यज्ञैः यद्यपि दम्भेनात्मप्रतिष्ठार्थं यजन्ते तथाप्यविधिपूर्वकं यजन्ते । परमेश्वरार्पणबुद्ध्या नेत्यर्थः ॥ १७ ॥

अविधिमेवाह—

अहंकारं बलं दर्पं कामं क्रोधं समाश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

मां परमेश्वरं स्वदेहे परदेहे च प्रद्विषन्तः । नास्तीश्वरः कश्चनेह कृतस्य
३ कर्मणः परलोके फलद इति, द्वेषयुक्त्याभ्यसूयन्ते निन्दन्तः ॥ १८ ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

अहं कृतस्य कर्मणः फलदः ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

ततः पूर्वस्या योनेरधमां नीचां योनिं यान्तीत्यर्थः ॥ २० ॥

अत्र हेतुं सिद्धान्तयति—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

आत्मनः स्वस्य नाशनं, नीचातिनीचजन्मदमित्यर्थः ॥ २१ ॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

तमसो मिथ्याज्ञानस्य द्वारैः प्रसरणमार्गैरेतैस्त्रिभिः कामाद्यैर्मुक्तः

---

१ 'च संश्रिताः' इति पाठः प्रायः सर्वत्रान्यत्र ।

२ '°मशुभास्वा°' इति प्रायः काश्मीरपाठः । अत्र मातृकायां '°मशुभामा°' इत्येव लिखितम् ।

३ 'नरा' इति रामकविपाठः । क्वचिदभिनवगुप्तमातृकायामपि दृश्यते ।

४ 'त्यजेत्' इति पाठः प्रायः सर्वत्रान्यत्र ।

५ 'वियुक्तः' इति क्वचिदभिनवगुप्तपाठः ।

आत्मनः श्रेयः, शास्त्रविहितज्ञानकर्मसमुच्चयानुष्ठानरूपम्, आचरति। ततः क्रमेण परां गतिं मुक्तिं याति ॥ २२ ॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

कामकारतः कामस्य विषयाभिलाषस्यैव करणीयता। कामकारतः आत्मसंभावनया स्वेच्छया च। सिद्धिं प्रारब्धस्य कर्मणो निष्पत्तिं नाप्नोति। तत्फलं सुखादिकं च नाप्नोति ॥ २३ ॥

इत्थमुपदिश्य भगवानध्यायार्थमुपजिहीर्षुरर्जुनं प्रस्तुते युद्धकरणे नियोजयति—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
कृत्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

तस्मादुक्ताद्धेतोस्तव दैवीं संपदमभिजातस्य इदं कार्यमिदं न कार्यमित्यस्यां व्यवस्थायां शास्त्रमाप्तोपदेश एव प्रमाणं, न तु कल्पिता स्वबुद्धिरित्यर्थः। अत एव कार्याकार्यव्यवस्थायां शास्त्रं प्रमाणीकृत्य शास्त्रे यद्विधानं, युध्यादिति क्षत्रियस्य युद्धावश्यकर्तव्यतालक्षणं विधिवाक्यं, तेन शास्त्रविधानेनोक्तं कर्म स्वजात्युक्तमिहास्मिन् समये कर्तुमर्हसीत्युपदेशसिद्धान्तः सिद्धः ॥ २४ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ षोडशोऽध्यायः ॥ १६ ॥

---

१ 'ज्ञात्वा' इति पाठः प्रायः सर्वत्रान्यत्र।

## ॥ सप्तदशोऽध्यायः ॥

ॐ श्रीगणेशाय नमः ॥ तस्माच्छास्त्रं प्रमाणमिति पूर्वाध्यायान्तोपदेशार्थसंबन्धपूर्विकया येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः (९।२४) इत्यविधिपूर्वकतोपदेशं लक्षणपरीक्षाविषयीकर्तुम्—

अर्जुन उवाच ।

ये शास्त्रविधिमुत्सृज्य यजन्ते[1] श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

शास्त्रविधिमुक्तयुक्त्या ब्रह्मार्पणप्रकारमुत्सृज्य अविधिपूर्वकमेव श्रद्धया ये भजन्ते तेषां सात्त्विकी वा राजसी वा तामसी वा निष्ठा स्यादित्यर्थः ॥ १ ॥

अत्रोत्तरं—

श्रीभगवानुवाच ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां[2] शृणु ॥ २ ॥

त्रिविधा हि सती श्रद्धा देहिनां स्वस्वभावसदृशी भवति । सात्त्विकानां सात्त्विकी राजसिकानां राजसी तामसिकानां तामसीति ता लक्ष्यमाणाः शृणु ॥ २ ॥

एतदेवाह—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

पूर्वजन्मवासनावासितं चित्तं सत्त्वमित्युच्यते । प्रसिद्धं हि लोके महासत्त्वाः इत्यल्पसत्त्वा इति च ॥ ३ ॥

---

१ 'वर्तन्ते' इति प्रायः काश्मीरपाठः ।

२ 'तां' इति प्रचलितपाठः । 'ताः' इति प्रायः काश्मीरपाठः, स एव टीकायामुद्धृतः ।

एतदभिव्यञ्जकक्रियाविशेषमाह—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
भूतान् प्रेतान् पिशाचांश्च यजन्ते तामसा जनाः ॥ ४ ॥

सात्त्विका जना देवानिन्द्रादीन् यजन्ते, श्रुत्युक्तविधानेनार्चयन्तीत्यर्थः।
३ राजसा यक्षादीन् श्रुत्युक्तिं विना शास्त्रान्तरैरर्चयन्ति। तामसाः फल-
कामनया श्रुतिविरुद्धाभिः क्षुद्रविद्याभिर्यजन्ते ॥ ४ ॥

एतच्चेष्टामाह—

अशास्त्रविहितं घोरं तपस्तप्स्यन्ति ये जनाः।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतनम्।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६ ॥

अन्तःशरीरस्थं मां जीवात्मानम्। आसुरो निश्चयः श्रद्धा येषाम् ॥५॥६॥

न केवलमुक्तप्रकारेणाभ्यन्तरेणैव सात्त्विकादिज्ञानं, किं तु दृश्यमानेनापीत्याह—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

३ त्रिविधः सात्त्विकादिभेदेन प्रियः ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनः।
रस्यः स्निग्धः स्थिरो हृद्य आहारः सात्त्विकप्रियः ॥ ८ ॥

सत्त्वमुत्साहः। बलं सामर्थ्यम्। आरोग्यं रोगहरम्। प्रीतिः तृप्तिः। रस्यः सरसः। स्थिरः देहस्थैर्यकरः। हृद्यः रुच्यः, ग्लानिहरः ॥ ८ ॥

---

१ 'प्रेतान् भूतगणांश्चान्ये' इति प्रचलितपाठः। 'भूतप्रेतपिशाचांश्च' इति प्रायः काश्मीरपाठः।

२ 'तप्यन्ते ये तपो' इति प्रचलितपाठः, गोण्डलमातृकायां दृश्यते।

३ 'कर्शयन्तः' इत्येव युक्तः पाठः।

४ '॰मचेतसः' इति प्रचलितपाठः, कलकत्तामातृकायां दृश्यते।

५ '॰मिदं' इति प्रचलितपाठः।

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

दुःखं हृत्पीडा । शोकः शरीरकृशता ॥ ९ ॥

तामसानाह—

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

यातयामं विगतोष्म । पूति दुर्गन्धि । पर्युषितमतिक्रान्तरात्रिकं, गतरसं
३ विनष्टस्वादं, शुष्कम् । अमेध्यं स्मृतिनिषिद्धं अशुचिप्रभावं वा ॥१०॥

यज्ञादित्रैविध्यमाह—

अफलाकाङ्क्षिणा यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमित्येव[1] मनः समाधाय स सात्त्विकः ॥ ११ ॥

कुर्यादिति श्रुतिचोदना विधिः ॥ ११ ॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यः[2] ।
इज्यते[3] विद्धि तं यज्ञं राजसं चलमध्रुवम् ॥ १२ ॥

फलानुपलब्धेरारब्धं पूर्वं कर्म त्यक्त्वा द्वितीयस्य कर्तव्येच्छया चलम् । अध्रुवमुपलब्धेऽपि फले सद्यो नाशादस्थिरम् ॥ १२ ॥

विधिहीनममृष्टान्नं[4] मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं[5] यच्च तामसं परिचक्षते ॥ १३ ॥

विधिरिति । कर्तव्यताहीनम् । अमृष्टान्नं पाकादिसंस्कारहीनान्नम् ॥ १३ ॥

---

१ 'यष्टव्यमेवेति' इति प्रचलितपाठः, गोण्डलमातृकायां कलकत्तामातृकायां च दृष्टः ।

२ 'यत्' इति प्रचलितपाठः, गोण्डलमातृकायां दृश्यते ।

३ 'इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्' इति उत्तरार्धस्य प्रचलितपाठः ।

४ '॰मसृष्टान्नं' इति प्रचलितपाठः ।

५ '॰विवर्जितं' इति कलकत्तामातृकापाठः ।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

आर्जवमस्तब्धत्वम् । गुरुषु प्रत्युत्थानप्रणिपातादि ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६ ॥

आत्मनो मनसो विनिग्रहो विषयेभ्यो निवर्तनम् ॥ १५ ॥ १६ ॥

अस्य सात्त्विकादिभेदेन त्रैविध्यमाह—

श्रद्धया परया[1] तप्तं तत् तपस्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

युक्तैः समाहितचित्तैः ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

सत्कारः साधुरयं तपस्वीति साधुवादः । मानो माननमाज्ञापालनम् ॥ १८ ॥

मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं च तत् तामसमुदाहृतम् ॥ १९ ॥

मूढस्याज्ञानिनो ग्रहेण हठेन कार्याकार्यफलमविचार्य ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

---

१ 'परयोपेतं' इति प्रायः काश्मीरपाठः गोण्डलमातृकावर्जम् ।

यत् तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसंमुदाहृतम् ॥ २१ ॥

परिक्लिष्टं, दीयते वा न वेति वितर्कक्लेशपूर्वं दत्तम् ॥ २० ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥ २२ ॥

॥ २२ ॥

प्रोक्तानां यज्ञादीनां सात्त्विकादीनां फलं ब्रह्मप्राप्तिं दर्शयितुमाह——

ॐ तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्रह्मणा तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

निर्दिश्यतेऽनेनेति निर्देशो, वाचकः शब्दः, ब्रह्मणो ब्रह्मशब्दा-
३ र्थस्य ॥ २३ ॥

त्रयाणामप्येषां शब्दानां ब्रह्मार्थवाचकत्वे प्रयोगमाह—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

उदाहृत्य——

३ ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च विशीर्यते ॥

इति स्मरणात्, सर्वस्मिन् कर्मणि ॐकारमादावन्ते चोच्चार्य ॥ २४ ॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

तच्छब्देन सर्वनाम्ना ब्रह्मणः परामर्शः । तदिति ब्रह्मार्पणाय फल-
मनभिसंधाय मोक्षकाङ्क्षिभिर्यज्ञादिक्रियाः क्रियन्ते इति ज्ञानकर्मसमु-
३ च्चयो निगमितः ॥ २५ ॥

---

१ 'तद्राजसमिति स्मृतम्' इति गोण्डलमातृकापाठः, प्रायः अभिनवगुप्तपाठश्च । 'तद्दानं राजसं स्मृतम्' इति तु प्रचलितपाठः ।

२ 'ब्राह्मणास्तेन' इति प्रचलितपाठः, अभिनवगुप्तेनानुसृतः ।

सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः परिपठ्यते ॥ २६ ॥

सद्भावे नित्यत्वे, साधुभावे शोभनीयत्वे कीर्तनीयत्वे ॥ २६ ॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

पूर्वश्लोकार्थानुगमेन सात्त्विकतया श्रुतिविहितेषु यज्ञादिषु स्थितिः सदिति च नित्या शोभना प्रशस्ता चेत्युच्यते । तदर्थीयं, तच्छब्दपरा-
३ मृष्टस्येश्वरस्यार्पणनिमित्तं क्रियमाणं कर्म, सदित्युच्यते । नित्यं शोभनं प्रशस्तं चोच्यते ॥ २७ ॥

एवं दैवसर्गभाजां सात्त्विकानां ज्ञानकर्मसमुच्चययुक्तिं ब्रह्मसमापत्तिहेतुं प्रतिपाद्यासुरसर्गभाजां तद्विपरीतां स्थितिं प्रतिपादयति—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ[1] न च तत् प्रेत्य नो इह ॥ २८ ॥

३ अश्रद्धयासात्त्विक्या श्रद्धया, इतरया राजस्या तामस्या च श्रद्धया, परमेश्वरार्पणं विना सर्वमसत्, अनित्यं अशोभनं अप्रशस्तं चेति सिद्धम् ॥ २८ ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ सप्तदशोऽध्यायः ॥ १७ ॥

---

१ 'पार्थ युज्यते' इति प्रचलितपाठः । 'पार्थ गीयते' इति रामकव्यभिनवगुप्तयोः पाठः, तथा गोण्डलमातृकायामपि ।

# ॥ अष्टादशोऽध्यायः ॥

श्रीशारदायै नमः ॥ श्रीगुरुभ्यो नमः ॥ अथैवं विदितवेद्यः स्वकर्मणामनुष्ठाने संशयविगमात् समुपजातोत्साहः प्राङ्निश्चितयोरपि संन्यासत्यागशब्दार्थयोरस्मिन् गीतासर्वार्थसिद्धान्तेऽध्याये परीक्षया याथात्म्यं वेदितुमिच्छन्—

अर्जुन उवाच ।

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

किं सर्वेषां कर्मणां न्यासः ब्रह्माणि समर्पणं, किंवा कस्यचिदेव, किमु फलमात्रस्येति । तथा त्यागोऽपि किं सर्वेषां कर्मणां, किमु कस्यचित्, किंवा फलमात्रस्येति संशयानः त्वत्तः एतत्तत्वं याथात्म्यं वेदितुमिच्छामि ॥ १ ॥

अत्रोत्तरं—

श्रीभगवानुवाच ।

**काम्यानां कर्मणां न्यासं[1] संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं[2] प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

काम्यानां कर्मणां सर्वथाननुष्ठानम् । सर्वेषां कर्मणां, अनुष्ठेयानां नित्यनैमित्तिकानां, फलस्य त्यागं विचक्षणाः, ज्ञानकर्मसमुच्चययुक्तिज्ञाः, प्राहुः ॥ २ ॥

संन्यासत्यागशब्दयोरेकार्थतया विस्तरयति—

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥**

एके केवलज्ञानानुष्ठानवादिनः दोषवद्बन्धकमिदमित्यतो हेतोः सर्वमेव

---

१ 'न्यासं' इतिस्थाने 'त्यागं' इति रामकविपाठः ।

२ 'त्यागं' इति कलकत्तामातृकापाठः ।

३ कर्म त्याज्यमित्याहुः ॥ ३ ॥

निश्चयं[1] शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः[2] ॥ ४ ॥

तत्र तयोः पक्षयोर्मध्ये ॥ ४ ॥

तावन्निश्चयमेवाह—

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

एवं न त्याज्यं कार्यमेवेति नियोगेन सर्वथैव केवलज्ञानानुष्ठायिमतं
३ निरस्तं परमेश्वरेण ॥ ५ ॥

एतान्यपि च[3] कर्माणि त्यक्त्वा सङ्गं फलानि च[4] ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥

असङ्गं रागद्वेषादिहठेन प्रवृत्तिम् । फलानि दृष्टादृष्टार्थानि ॥ ६ ॥

त्यागस्य त्रैविध्येन हेयोपादेयतामाह—

नियतस्य च[5] संन्यासः कर्मणो नोपपद्यते ।
मोहात् तस्य परित्यागः तामसः परिकीर्तितः ॥ ७ ॥

मोहान्मिथ्याज्ञानात् तामसः कुयोनिप्राप्तिहेतुर्न तु मोक्षहेतुरि-
३ त्यर्थः ॥ ७ ॥

दुःखमित्येव यत्[6] कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव तत्र[7] फलं लभेत् ॥ ८ ॥

---

१ 'निश्चयः' इति मातृकायां प्रायः प्रामादिकः पाठः ।
२ 'संप्रदर्शितः' इति क्वचित् रामकविपाठः ।
३ 'तु कर्माणि' इति प्रचलितपाठः, कलकत्तागोण्डलमातृकयोर्दृश्यते ।
४ 'सङ्गं त्यक्त्वा फलानि' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र ।
५ 'नियतस्य तु' इति प्रचलितपाठः ।
६ 'यत्' इतिस्थाने 'यः' इति प्रायः काश्मीरपाठः ।
७ 'त्यागफलं' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र ।

दुःखमित्येव, इदं सर्वथा दुष्करमिति ज्ञानात् । अत्र फलालाभमात्रमेव न, किं तु प्रत्यवायाप्तिरपीत्यर्थः ॥ ८ ॥

अत्रोपायमाह—

कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

सङ्गं लाभपूजाद्यर्थां प्रवृत्तिं, दृष्टं फलमदृष्टं स्वर्गादिकम् ॥ ९ ॥

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते[1] ।
त्यागी सत्त्वसमाविष्टो[2] मेधावी छिन्नसंशयः ॥ १० ॥

अकुशलं, दुःखोत्पादकं परैः प्रयुक्तमवमानताडनादि न द्वेष्टि, पूर्वकृतफलमिदं मयावश्यं भोक्तव्यमिति मत्वा । कुशले सुखोत्पादके परैः प्रयुक्ते लाभपूजादौ सङ्गं सक्तिं न करोति । इत्थं सत्त्वेन प्रकाशेन समाविष्टः । मेधावी गुणदोषावत्र पर्यालोचयन्, अत एव च्छिन्नसंशयस्तत्त्ववित् विगतरागद्वेषो नियतं कर्मानुतिष्ठन्नेव त्यागीत्युच्यते ॥ १० ॥

कर्मसंन्यासमपवदति—

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

देहभृता ध्रियमाणशरीरेण । अशेषतः, कायिकवाचिकमानसिकसामस्त्येन । कर्माणि त्यक्तुं न शक्यम् । अवश्यंभाविनामपरिहार्यत्वात् । तु पुनः, अतो हेतोः, उक्तप्रकारेण कुर्वन्नेव कर्माणि यः फलत्यागी स त्यागीत्युच्यते । न निरग्निर्न चाक्रियः ( ६।१ ) इति सिद्धम् ॥ ११ ॥

कर्मफलत्यागिनं स्तौति—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

अनिष्टं नरकादि । इष्टं स्वर्गादि । मिश्रं मानुष्यकम् । अत्यागिनां कर्म-

---

१ 'नानुषज्जति' इत्यभिनवगुप्तपाठः ।

२ 'सत्यसमाविष्टो' इति कलकत्तापाठः ।

फलाभिसंध्यायिनां, प्रेत्य जन्मान्तरे भवति । न तु संन्यासिनां कर्मफलत्यागिनां क्वचित् स्वर्गनरकादावेतद्भवति । ते हि काम्यं न कुर्वन्ति, नापि प्रतिषिद्धम् । यदि कदाचित् प्रतिषिद्धमापतितं तदपि, इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते, नाहमेषां कर्तेत्यहंकारापगमादपनीतप्रायमित्युक्तं बहुशः ॥ १२ ॥

तदेवं देहभृतामपरिहरणीयस्य नियतस्य कर्मणः सिद्धिकारणान्याह—

पञ्चेमानि[1] महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥

सांख्ये सम्यक् ख्यायन्ते विशेषैः कथ्यन्ते महाभूतादिविकृतिप्रकृतिपुरुषकालपरमेश्वराख्याः पञ्च पदार्था यस्मिंस्तस्य सांख्यस्य मोक्षशास्त्रस्य सिद्धान्ते ॥ १३ ॥

तान्येवाह—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक् चेष्टा दैवमेवात्र[2] पञ्चमम् ॥ १४ ॥

अधिष्ठानं, शरीरं भूतेन्द्रियादिप्रकृतिविकृतिसंघातरूपम् । कर्ता, जीवात्मा पुरुषः । करणं पृथग्विधमेकादशेन्द्रियवर्गः । पृथक्चेष्टाः, संकल्पविकल्पौ, श्रवणादिके, गमनादि चेति इन्द्रियव्यापारः । दैवं कालस्वरूपेणान्तर्यामिस्वरूपेण च परमेश्वरेण प्राक्कृतकर्मफलभोगं प्रति प्रेरणम् ॥ १४ ॥

एतदेव लक्षयति—

शरीरवाङ्मनोभिर्हि यत्[3] कर्मारभतेऽर्जुन ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

न्याय्यं शास्त्रचोदनया विहितं, विपरीतं निषिद्धम् ॥ १५ ॥

---

१ 'पञ्चैतानि' इति प्रचलितपाठः ।

२ 'दैवं चैवात्र' इति प्रचलितपाठः कलकत्तामातृकायां तथा गोण्डलमातृकायां दृष्टः ।

३ '॰मनोभिर्यत् कर्म प्रारभ॰' इति प्रचलितपाठः ।

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

तत्रैवं तस्मिन् पञ्चके एवं समस्तत्वेन कर्तरि सति, य आत्मानं
केवलमेकाकिनमनन्यापेक्षिणं कर्तारं पश्यति जानाति, स दुर्मतिस्ता-
३ मसिकः । अत एवाकृतानुत्पन्ना बुद्धिः सम्यग्ज्ञानाध्यवसायो यस्य
तस्याभावान्न पश्यति नालोचयति । आत्मनः शरीरादिसंयोगे तद-
धिष्ठातृत्वादहंकारात् कर्तृत्वम् । योगसिध्यै तत्पृथक्स्थितस्य तु न
६ कर्तृत्वम्, इत्यर्थः ॥ १६ ॥

एतदेव प्रकटत्वमाह—

यस्य नाहंकृतो भावो यस्य[1] बुद्धिर्न लिप्यते ।
हत्वापि स इमाँल्लोकान् न[2] निहन्ति न बध्यते ॥ १७ ॥

अहमेवैकाकी कर्ता, न तु पञ्चकसामग्रीत्येवंप्रकारोऽहंकृतो भावो यस्य
३ नास्ति । यस्य चैवं सात्त्विकस्य बुद्धिर्न लिप्यते, पञ्चकक्रमं विना
स्वात्मन्येव शुभाशुभकर्तृत्वं न मनुते । स इमान् लोकान् हत्वापि न
हन्ति, कर्तृत्वानभिमानात् । न बध्यते, न च तस्य तत् कर्म बन्धक-
६ मित्यर्थः । अत्र कापिलैर्यदुक्तम्—आत्मनः स्वभावत एव कर्तृत्वं
नास्ति, विक्रियाप्रसङ्गादिति, तदयुक्तम् । न हि क्रियायोगमात्रेण
विक्रिया । न हि पचनक्रियया देवदत्तस्य विक्रिया स्वरूपविच्युति-
९ र्भवति । विक्रिया हि सावयवस्यावयवविश्लेषादिना सुवर्णादेः कुण्ड-
लत्वादिनेवेति शास्त्रसिद्धार्थः ॥ १७ ॥

सामस्त्येन सर्वेष्वेव कारकेषु सत्सु क्रियाया निष्पत्तिर्न त्वेकस्मिन् कस्मिंश्चिद्व्यस्ते, इति दर्शयति—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंश्रयः[3] ॥ १८ ॥

---

१ 'बुद्धिर्यस्य न' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र ।

२ 'न हन्ति न निबध्यते' इति प्रचलितपाठः, प्रायः सर्वत्रान्यत्र ।

३ '॰संश्रयः' इति मातृकायां विद्यमाने श्लोकपाठेऽपि, टीकायां '॰संग्रहः' इत्येव व्याख्यातम् ।

चक्षुषा त्वं रूपं पश्येत्यादिकं कर्मणि प्रवर्तकमाप्तवचनं कर्मनोदना, ज्ञानज्ञेयपरिज्ञातृभेदेन त्रिविधा त्रितयसंयोगादेव सिध्यति । न त्वेकतरापाये । तथा हि ज्ञेयं वस्तु येनेन्द्रियादिना करणेन ज्ञायते तज्ज्ञानं, यो हि जानाति स परिज्ञाता ज्ञेयवस्तुपरिज्ञानकर्ता पुरुषः, तस्मात् कर्मसंग्रहः । कर्मणः ज्ञानादिसंबन्धेन ग्रहणम् । करणं कर्म कर्तेति त्रिविधः त्रयाणां संबन्धेन सामस्त्येन समुदायेनैव भवति । न त्वेकतरापाये व्यस्तत्वेनेत्यर्थः । तथा हि चक्षुषा त्वं रूपं पश्येति दर्शनक्रियानोदनायां चक्षुषेति अतिशयितं साधकं करणं तृतीयान्तम् । रूपमिति क्रियया प्राप्तुमिष्टं कर्म द्वितीयान्तम् । त्वमिति करणस्य कर्मणः प्रवर्तकः क्रियायाश्च संपादकः प्रथमान्तः कर्तेति । तस्मात् करणादिसाधारण्येन कर्मसिद्धौ तत्र कथं केवल आत्मा कर्तेति वाक्यान्वयः ॥ १८ ॥

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यन्ते[1] गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

गुणभेदतः, गुणानां सत्त्वादीनां विभागात्, गुणाः संख्यायन्ते स्वरूपभेदादिकथनेन विचार्यन्ते यस्मिन्निति गुणसंख्याने शास्त्रे ॥ १९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते[2] ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥

उक्तपूर्वं ब्रह्मार्पणप्रकारकं ज्ञानयज्ञं सात्त्विकं विद्धीत्यर्थः ॥ २० ॥

पृथक्त्वेन तु[3] यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम् ॥ २१ ॥

---

१ 'प्रोच्यते' इति प्रचलितपाठः प्रायः सर्वत्रान्यत्र ।

२ '॰मव्ययमीक्ष्यते' इति कलकत्तापाठः, '॰मव्ययं वीक्षते' इति '॰मव्ययमश्नुते' इति त्वन्यत्र ।

३ 'च' इति क्वचित् काश्मीरपाठः ।

४ 'तज्ज्ञानं विद्धि राजसम्' इति प्रचलितपाठः ।

तैस्तैः कामैर्हृतज्ञानाः (७।२०) इत्युक्तप्रकारकं राजसं ज्ञानमित्यर्थः। तथा च। ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते। एकत्वेन पृथक्त्वेनेत्यपि नवमाध्यायोक्तं (श्लो० १६) परीक्षितम् ॥ २१ ॥

यत् त्वकृत्स्नवि[1]देकस्मिन् कार्ये सक्तमहे[2]तुकम्।
अतत्त्वार्थवदल्पं च तत् तामसमुदाहृतम् ॥ २२ ॥

अकृत्स्नवित् येन ज्ञानेन कृत्स्नमुक्तप्रकारकं कर्म करणकर्त्रादीनामैक्यं न ज्ञायते। एकस्मिन् कस्मिंश्चित् कार्ये सुखसाधने सक्तमभिचारादौ। अतत्त्वार्थवत्, तत्त्वार्थः परमार्थज्ञानं यत्र न विद्यते। अल्पमदीर्घविषयम् ॥ २२ ॥

अथ कर्मत्रैविध्यम्—

नियतं सङ्गरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ॥ २३ ॥

नियतमावश्यकं स्वजात्युक्तम्। सङ्गरहितं लाभपूजाद्यर्थहीनम् ॥२३॥

यत् तु कामेप्सुना कर्म साहंकारेण वा पुनः।
क्रियते क्लेश[3]बहुलं तद्राजसमिति स्मृ[4]तम् ॥ २४ ॥

कामेप्सुना, ऐहिकामुष्मिकभोगेप्सुना। साहंकारेण ब्रह्मापर्णयुक्तिं परित्यज्य शरीरादावहंभाववता, यदन्यैर्महात्मभिः कृतं तदहमपि कुर्वे इति सगर्वेण च। शरीरचित्तवित्तव्ययायासभूयिष्ठं क्लेशबहुलम् ॥२४॥

अनुबन्धं क्षयं हिंसाम[5]नवेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥ २५ ॥

---

१ 'तु कृत्स्नवदेक°' इति प्रचलितपाठः, कलकत्तामातृकायां दृष्टः। 'त्वकृत्स्नवदेक°' इत्यभिनवगुप्तपाठः।

२ '°महैतुकम्' इति प्रचलितपाठः।

३ 'बहुलायासं' इति प्रचलितपाठः।

४ '°मुदाहृतम्' इति प्रचलितपाठः।

५ '°मनपेक्ष्य' इति प्रचलितपाठः।

अनुबन्धं फलं शुभमशुभं वेत्यनवेक्ष्याविचार्य, तथा क्षयं द्रव्यादि-
व्ययं, हिंसां परपीडां, पौरुषं स्वसामर्थ्यं, चानवेक्ष्य मोहाद्विपरीत-
३ ज्ञानाद्यदारभ्यते, न तु निवार्यते, तत् तामसमुच्यते ॥ २५ ॥

अथ कर्तृभेदः—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

कर्ता कर्मानुष्ठाता । मुक्तसङ्गः दृष्टे चादृष्टे च कर्मफलेऽनासक्तः । अन-
३ हंवादी, यन्मया कृतं तत् कोऽन्यः कर्तुं शक्नुयादिति विकत्थनशून्यः ।
धृतिः, प्रारब्धस्य कर्मणः समाप्तिं यावत् स्थैर्यम् । उत्साह उद्योगः ।
सिद्ध्यसिद्ध्योर्निर्विकारः, हर्षशोकशून्यः ॥ २६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः[1] ॥ २७ ॥

रागी विषयेषु प्रीतिमान् । लुब्धो द्रव्यव्ययभीरुः ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिको[2]ऽलसः ।
विषादी दीर्घसूत्रश्च[3] कर्ता तामस उच्यते ॥ २८ ॥

अयुक्तो युक्तिमुपायज्ञानं विना प्रवृत्तः । प्राकृतो नीचात्मा । स्तब्धः
सगर्वः । शठो मायावी । नैकृतिकः परहिंसार्थं प्रवृत्तः । अलसः
३ सामर्थ्येऽपि निरुत्साहः । विषादी पश्चात्तापी । दीर्घसूत्रः, सद्यः-
संपाद्यमपि कार्यं विलम्ब्य निर्वाहयन् ॥ २८ ॥

एवं कर्मणः कर्तुश्च त्रैविध्यमुक्त्वा, अन्तःकरणस्य बुद्धेः धृतेश्च
त्रैविध्यमाह—

---

१ 'परिकीर्त्यते' इति रामकव्यभिनवगुप्तयोः पाठः । 'परिकीर्तितः' इति प्रचलितपाठः, कलकत्तागोण्डलमातृकयोरुपलभ्यते ।

२ 'नैष्कृतिकः' इति प्रचलितपाठः, गोण्डलपाठश्च ।

३ 'दीर्घसूत्री च' इति प्रचलितपाठः ।

बुद्धेर्भेदं धृतेश्चैव त्रैविध्यं[1] गुणतः शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥

३ अशेषेणैक्येन, पृथक्त्वेन भेदेन ॥ २९ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या बुद्धिर्वेद[2] सा सात्त्विकी मता ॥ ३० ॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

अयथावत् यथावदावश्यकतया प्रवृत्तिनिवृत्तिविषयं न जानाति । धर्मादपि निवर्तते । अधर्मेऽपि प्रवर्तते ॥ ३० ॥ ३१ ॥

अधर्मं धर्ममिति या बुध्यते[3] तमसान्विता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा तामसी मता ॥ ३२ ॥

स्पष्टोऽर्थः ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ[4] सात्त्विकी ॥ ३३ ॥

योगेन ज्ञानकर्मसमुच्चययुक्त्या । धृत्या चित्तस्थैर्येण, आभ्यन्तरेण चित्तवृत्तिनिरोधेन । अव्यभिचारिण्या सदैकरूपया । धृत्या चित्त-
३ स्थैर्येण । पुरुषः मनःप्राणेन्द्रियक्रियाः धारयतेऽवष्टम्भते सा सात्त्विकी धृतिः ॥ ३३ ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

फलाकाङ्क्षी धर्मस्य प्रसङ्गे यया धृत्या धर्ममेव धारयते, नार्थकामौ ।

---

१ 'गुणतस्त्रिविधं' इति पाठः सर्वत्रान्यत्र ।

२ 'वेत्ति बुद्धिः सा पार्थ सात्त्विकी' इति प्रचलितपाठः, कलकत्तागोण्डलमातृकयोर्दृश्यते ।

३ 'मन्यते' इति प्रचलितपाठः, कलकत्तागोण्डलमातृकयोर्दृश्यते ।

४ 'सा सात्त्विकी मता' इति प्रायः काश्मीरपाठः ।

कामप्रसङ्गे तु न धर्मार्थौ । अर्थप्रसङ्गे न धर्मकामौ । सा चञ्चलत्वा-
३ द्राजसी धृतिः ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा[1] तामसी मता ॥ ३५ ॥

दुर्मेधाः धर्मादित्यागात् स्वप्नादिष्वेवासक्तेर्दुर्बुद्धिः । विषादमनुत्साहम् ॥ ३५ ॥

अत्रैतत्कर्मफलस्य सुखस्य त्रैविध्यमाह—

सुखं त्विदानीं शृणु[2] मे त्रिविधं भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च नियच्छति[3] ॥ ३६ ॥

यत् तदात्वे[4] विषमिव परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं विद्यादात्म[5]बुद्धिप्रसादजम् ॥ ३७ ॥

अभ्यासाद्यत्र रमते, न तु विषयसुखवदभ्यासादुद्विजते । दुःखस्यान्तं
३ मोक्षं च नियच्छति ददाति । तदात्वे साध्यावस्थायां विषमिवेन्द्रियाणां निरोधे क्लेशावहत्वात् । आत्मबुद्धिः, परमात्मविषयं ज्ञानं, तस्या नैर्मल्येन जातम् ॥ ३६ ॥ ३७ ॥

विषयेन्द्रियसंयोगाद्यत् तदात्वे[6]ऽमृतोपमम् ।
परिणामे विषमिव तद्राजसमिति[7] स्मृतम् ॥ ३८ ॥

परिणामे सिद्धावस्थायां विषमिव, पुनः पुनः संसरणहेतुत्वेनात्यन्तदुःखदायित्वात् ॥ ३८ ॥

---

१ 'सा पार्थ तामसी' इति प्रचलितपाठः । 'मता' इतिस्थाने 'स्मृता' इति रामकविपाठः ।

२ 'त्रिविधं शृणु मे' इति प्रचलितपाठः ।

३ 'निगच्छति' इति प्रचलितपाठः, कलकत्तागोण्डलमातृकयोरुपलभ्यते ।

४ 'तदग्रे' इति प्रचलितपाठः ।

५ 'प्रोक्तमात्म॰' इति प्रचलितपाठः ।

६ 'तदग्रे' इति प्रचलितपाठः ।

७ 'तत् सुखं राजसं' इति प्रचलितपाठः ।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत् तामसमुदाहृतम् ॥ ३९ ॥

अग्रे साध्यावस्थायाम्, अनुबन्धे परिणामे, आत्मनो मोहनं विपरीतज्ञानजनकम् ॥ ३९ ॥

अनुक्तं भूतानां त्रैविध्यं संगृह्णाति—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥

॥ ४० ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसीति (२।३१) यत् प्रागुद्दिष्टं तल्लक्षणमपि परीक्षयन् वर्णानां स्वभावभेदेन गुणविभागमाह—

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

३ स्वभावः, परैरसाधारणः स्वभावः प्रकृतिप्रकारः, तत्प्रभवैः गुणैः, स्वजात्युक्तैर्धर्मैः, कर्माणि शास्त्रोक्ताः क्रियाः ॥ ४१ ॥

प्रविभागमाह—

शमो दमस्तपः[1] शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं[2] कर्म स्वभावजम् ॥ ४२ ॥

ब्राह्मं ब्राह्मणसंबन्धि । अन्यत् बहुशो व्याख्यातपूर्वम् ॥ ४२ ॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं[3] कर्म स्वभावजम् ॥ ४३ ॥

शौर्यं पराक्रमः । तेजः पराभिभवासहनम् । धृतिः स्वकर्मणि दार्ढ्यम् । दाक्ष्यं सम्यक्कार्याकार्यविवेकः । ईश्वरभावो निग्रहानुग्रह-
३ शक्तिः ॥ ४३ ॥

---

१ 'दमस्तथा' इति प्रायः काश्मीरपाठः ।

२ 'ब्रह्मकर्म' इति प्रचलितपाठः, कलकत्तागोण्डलमातृकयोर्दृश्यते ।

३ 'क्षत्त्रकर्म' इति प्रचलितपाठः ।

कृषिगोरक्ष्य[1]वाणिज्यं वैश्यकर्मस्वभावजम् ।
पर्युत्थाना[2]त्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

गोशब्दः पशुसामान्यवाची, गोरक्ष्यं पाशुपाल्यम् । वाणिज्यं क्रय-विक्रयवृद्ध्यादिना जीवनम् । त्रयाणामेव वर्णानां परिचर्या ॥ ४४ ॥

स्वकर्मानुष्ठानस्य फलमाह—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विदन्ति तच्छृणु ॥ ४५ ॥

स्वे स्वे कर्मणि शास्त्रचोदितेऽभिरतो नरो, मनुष्यः यः कश्चित् चातु-
३ वर्णिकः चातुराश्रमिकः, संसिद्धिं प्रोक्तप्रकारेण मुक्तिं लभते । न तु
ब्राह्मण एव यतिमात्र एवेत्यर्थः ॥ ४५ ॥

न खलु केवलस्यास्य कर्मणो मुक्तिसाधनत्वं, किं तु ज्ञानसमुच्चित-स्येति दर्शयति—

यतः प्रवृत्तिर्भूतानां येन विश्व[3]मिदं ततम् ।
स्वकर्मणा तमेवार्च्य[4] सिद्धिं विन्दति मानवः ॥ ४६ ॥

३ स्वकर्मणा, स्वेन प्रतिवर्णं नियतेन कर्मणा, तं परमेश्वरं एवार्च्य,
आ समन्ताद्ब्रह्मार्पणप्रकारैक्येन ज्ञानपूर्वमर्चयित्वा, सिद्धिं मुक्तिं
विदन्ति लभते मानवः ॥ ४६ ॥

अत्रोपपत्तिं पूर्वोक्तामेव लक्षणपरीक्षार्थं स्मारयति—

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।[5]
स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्बिषम् ॥ ४७ ॥

स्वधर्मः स्वजातिधर्मः । विगुणो हिंसादिना विरुद्धगुणः ॥ ४७ ॥

---

१ 'गौरक्ष्य॰' इति प्रचलितपाठः । 'गोरक्ष॰' इति गोण्डलपाठः ।
२ 'परिचर्यात्मकं' इति प्रचलितपाठः ।
३ 'सर्वमिदं' इति प्रचलितपाठः ।
४ 'तमभ्यर्च्य' इति प्रचलितपाठः, अभिनवगुप्तेनानुसृतः ।
५ अतः परं गोण्डलमातृकायामधिकः श्लोकार्धो (±३।३५) यथा—
स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ।

एतदेव प्रतिपादयति—

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृतः[1] ॥ ४८ ॥**

सदोषमपि हिंसादिदूषितमपि युद्धं तव क्षत्रियस्यावश्यकरणीय-
३ मित्यर्थः । अत्र हेतुमाह । यथाग्निरवश्यसेव्यो धूममात्रदोषान्न
त्यज्यते, तथा हिंसामात्रदोषाद्युद्धं न त्याज्यमित्यर्थः ॥ ४८ ॥

सिद्धिं विन्दतीति यदुक्तं तल्लक्षणं परीक्षयति—

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

असक्तबुद्धिः रागद्वेषहीनः । जितात्मा जितेन्द्रियः । विगता स्पृहा
३ फलाभिलाषो यस्य । संन्यासेन, समनन्तरमेव काम्यानां कर्मणां
न्यासमित्यादिसिद्धान्तितेन, परमां नैष्कर्म्यसंपाद्यां सिद्धिं ब्रह्मप्राप्तिं
अधिगच्छति ॥ ४९ ॥

एवं कर्मयुक्तिजां सिद्धिं संदर्श्य संयमयोगजामपि दर्शयति—

**सिद्धिं प्राप्तो यथा ब्रह्म तदाप्नोति[2] निबोध मे ।**
**समासेन[3] तु कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥**

यथा सिद्धिं योगसिद्धिं प्राप्तः । तदाप्नोति, या ब्रह्मप्राप्तिरेव ज्ञानस्य
३ परा निष्ठा निर्वाहस्थानं, ततः परमपरस्य ज्ञेयस्याभावात् । तदेतत्
संक्षेपेण मे मयोच्यमानं निबोध ॥ ५० ॥

योगसिद्धिप्रक्रियामेवाह—

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।**
**शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ नियम्य च ॥ ५१ ॥**

---

१ '॰रिवावृताः' इति पाठः प्रायः सर्वत्रान्यत्र ।

२ 'तथाप्नोति' इति प्रचलितपाठः, अभिनवगुप्तेनानुसृतः । 'प्राप्नोति तन्' इति गोण्डलपाठः ।

३ 'समासेनैव' इति प्रचलितपाठः ।

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

विशुद्धया योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेरिति पातञ्जलद्वितीयपादसूत्रार्थानुगमेन योगाङ्गानां बाह्यानां यमादीनां पञ्चानामाभ्यन्तराणां ध्यानादीनां त्रयाणां ज्ञानानुष्ठानादशुद्धिरूपस्याविद्यादिपञ्चपर्वणो विपर्ययज्ञानस्य क्षयात् क्रमेण सम्यग्ज्ञानाधिगमादावरणविगमे प्रकाशमानया बुद्ध्या युक्तो योगी, धृत्या तत्र तत्र भूमौ चित्तबन्धसंज्ञया धारणया आत्मानं चित्तं नियम्य निरुध्य च। शब्दादीन् विषयांस्त्यक्त्वा स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः, इति द्वितीयपादसूत्रार्थानुसारं पूर्वां पूर्वां जितां भूमिं संयमदार्ढ्येन त्यक्त्वा, उत्तरामुत्तरां भूमिमारूढः। रागद्वेषौ व्युदस्य च। रागद्वेषौ रजःकार्यौ दूरीकृत्य सत्त्वैकनिष्ठां प्राप्य। विविक्तसेवी लघ्वाशी, युक्ताहारविहारः यमनियमानुष्ठायी। यतवाक्कायमानसः, दृढासनः प्राणायामाभ्यासी। प्रत्याहृतेन्द्रियश्चेत्यभ्यस्तयोगबाह्याङ्गपञ्चकः। ध्यानयोगपरः, योगाङ्गत्रये आभ्यन्तरे ध्यानधारणासमाधिनाम्नि संयमे तत्परः। अत एव नित्यं वैराग्यं समुपाश्रितः, नित्यमविनश्वरं वैराग्यं, दृष्टानुश्रविकविषयवैतृष्ण्यं स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टसङ्गादिति योगशास्त्रे तृतीयपादे सूत्रार्थानुगमेन समुपाश्रितः। अस्यार्थः—चत्वारः खल्वमी योगिनः। प्रथमकल्पिकः, मधुभूमिकः प्रज्ञाज्योतिः, अतिक्रान्तभावनीयश्च। एतेषां लक्षणानि योगशास्त्रादधिगन्तव्यानि विस्तरभयान्न लिखितानि। तत्र मधुमतीं भूमिं साक्षात्कुर्वतो योगिनः स्थानिनो देवास्तत्तस्थाना-

१ योगसूत्र, २।२८।
२ योगसूत्र, ३।४४।
३ द्रष्टव्यं योगसूत्रम् १।१५।
४ द्रष्टव्यं योगसूत्रम् ३।५१, तदुपरि व्यासभाष्यं च।

धिकारिणः सत्त्वशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते। रम्या इमा अप्सरस, रसायनमिदं जरामृत्युहरम्, अमी यथाभिलषितदायिनो देवद्रुमाः, धर्मद्रवा इयं गङ्गा, सिद्धा इमे महर्षयः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः। त्वयेदं सर्वं स्वगुणैरुपार्जितं प्रतिपद्यतामिदमक्षयमजरममरं स्थानमिति प्रार्थयन्ते। तत्र योगी सङ्गं न कुर्यात्। जननमरणान्धकारे विपरिवर्तमाने मया कथंचिदासादितः क्लेशतिमिरविनाशी योगप्रदीपः। तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः। कथमनयैव विषयमृगतृष्णया वञ्चितोऽहं पुनस्तस्यैव प्रदीप्तस्य संसाराग्नावात्मानमिन्धनीकुर्याम्। स्वस्ति स्वप्नोपमेभ्यो विषयेभ्यः, इति समाधिं भावयेत्। सङ्गमकृत्वा स्मयमपि न कुर्यात्। एवमहं देवानामपि प्रार्थनीय इति। स्मयादयं सुस्थितंमन्यतया मृत्युना केशगृहीतमात्मानं न भावयिष्यति। तथा चास्य च्छिद्रान्वेषी प्रमादो लब्धविवरः क्लेशपञ्चकमुत्तम्भयिष्यति। ततश्च पुनरनिष्टप्रसङ्गः। एवमस्य सङ्गस्मयावकुर्वतः भावितोऽर्थो दृढीभवति। भावनीयश्चाभिमुखी भविष्यतीति सिद्धम् ॥ ५१ ॥ ५२ ॥ ५३ ॥

ब्रह्मभावं प्राप्तस्य परीक्षामाह —

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न हृष्यति[1]।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥**

ब्रह्मभूतः, प्रोक्तविधया योगसिद्ध्या ब्रह्मभावं प्राप्तः। प्रसन्नात्मा—मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्[2]—इति सूत्रोक्तात्मबीजसमाधिकृताच्चित्तप्रसादादुत्तरकालं निर्बीजसमाधौ निर्विचारवैशारद्यादध्यात्मप्रसाद इति सूत्रार्थप्रतिपत्त्या[3] निर्विचारे मैत्र्यादिभावनोत्तीर्णे निर्बीजे समाधौ वैशारद्याद्बुद्धिसत्त्वस्यावरणापगमे प्रकाशात्मनो रजस्तमोभ्यामनभिभवनी-

---

१ 'न काङ्क्षति' इति प्रचलितपाठः। 'न हृष्यति' इति प्रायः काश्मीरपाठः, पाठान्तरत्वेन शाङ्करभाष्ये निर्दिष्टः।

२ योगसूत्र, १।३३।

३ योगसूत्रम् १।४७, तद्भाष्यं च।

यात् स्वच्छस्थितिप्रवाहात् प्रसन्नः स्फुटीभूतप्रज्ञालोकः आत्मा अन्तः-करणं यस्येदृशः न शोचति, दुःखितेषु करुणां न भावयति। न हृष्यति, सुखितेषु मैत्रीं न भावयति। सर्वेषु भूतेषु समः, पुण्यापुण्येषु प्राणिषु निर्व्यपेक्षः। परां मद्भक्तिं, आर्तो जिज्ञासुरर्थार्थी ज्ञानी चेति (७।१६) लक्षितां चतुर्थीं काष्ठां प्राप्तो, ज्ञानात्मिकां सत्त्वरूपापत्तिं लभते ॥ ५४ ॥

भक्तिफलमाह —

भक्त्या मामभिजानाति योऽहं यश्चास्मि[1] तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

योऽहं परमात्मस्वरूपः सर्वज्ञः सर्वकर्ता सर्वेश्वरः अशरीरः सशरीरो वास्मि, तमीदृशं परमात्मानमभिजानाति, साक्षात्करोति, प्रकृतिपुरुषकालेश्वरसंख्यानेन चातुरात्म्यप्रतिपत्त्या वासुदेवः सर्वमिति प्रत्यभिजानाति। तदनन्तरं, तदुत्तरकालं मां तत्त्वतः परमार्थतो ज्ञात्वा, विशते, कैवल्यमापद्यते ॥ ५५ ॥

तदेवं संयमयोगोद्वलितस्य सर्वसाधारण्यात् कर्मयोगस्य ज्ञानेन समुच्चितस्य सर्वतः परीक्षयित्वा श्रेयःसाधनतां, पार्थं प्रति प्रस्तुतं कर्मयोगमेव सिद्धान्तयति—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

मद्व्यपाश्रयः ब्रह्मार्पणप्रकारेणाहमेक एव व्यपाश्रयः तत्तत्कर्मफलप्रापणाद्याधारं यस्य ॥ ५६ ॥

तदेवं सर्वानुग्रहसाधारण्येन गीतार्थोपदेशसर्वस्वमुद्देशलक्षणपरीक्षाभिरवधार्य स्थिरीकृतम्। इतः परं प्रकरणार्थमुपसंजिहीर्षुरर्जुनमेव प्रस्तुतकार्यसाधनार्थं नियोजयति—

---

१ 'यावान् यश्चास्मि' इति प्रचलितपाठः।

चेतसा सर्वकर्माणि मयि संन्यस्य भारत[1] ।
बुद्धियोगं समाश्रित्य[2] मच्चित्तः सततं भव ॥ ५७॥

सर्वाणि कर्माणि क्रियमाणान्येव चेतसा फलनिस्पृहेण मयि संन्यस्य निक्षिप्य, बुद्धिर्ज्ञानं तत्पूर्वकं योगं, कर्मकरणयुक्तिं समाश्रित्य, सततं सर्वास्ववस्थासु मच्चित्तो मदेकशरणं भव ॥ ५७ ॥

मच्चित्तः सर्वदुःखानि मत्प्रसादात् तरिष्यसि ।
अथ चेत् त्वमहंकारं न मोक्ष्यसि[3] विनङ्क्ष्यसि ॥ ५८॥

मच्चित्तो मदेकाश्रितः, मम परमेश्वरस्यानुग्रहात्, सर्वाणि दुःखानि प्रथमाध्यायोत्प्रेक्षितानि तरिष्यसि । परमार्थतश्च हर्षशोकमोहादीनि संसारबन्धकारणानि तीर्त्वा मत्सायुज्यमापद्यसे । अथ चेद्यदि तु त्वं रजस्तमसोरुद्रेकेण सत्त्वाभिभवान्मदुपदेशमनादृत्य अहंकारं न मोक्ष्यसि, ममैते बन्धवः युद्धे म्रियन्ते, मम त्वेतन्मरणादिह परत्र वा विरुद्धैव गतिः स्यादिति युद्धत्याग एव श्रेयानित्येतन्मिथ्याज्ञानं न त्यजसि, ततो विनङ्क्ष्यसि । स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि (२।३४) इति समुद्दिष्टमुभयलोकविभ्रंशं प्राप्स्यसीत्यर्थः ॥ ५८ ॥

तथा रजस्तमसोरुद्रेकाद्युद्धाकरणनिश्चयोऽपि न पर्यवस्यतीत्याह—

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैव [4]व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९॥

अहंकारं, यद्यप्येते न पश्यन्ति । कथं न ज्ञेयमस्माभिरित्येवंरूपं (१।३८) मिथ्याभिमानमाश्रित्य, न योत्स्येऽहमिति यन्मन्यसे वृथोत्प्रेक्षसे । अयं व्यवसायो निश्चयस्तव मिथ्यैव व्यर्थ एव । यतः प्रकृतिः क्षत्रियजात्यारम्भको रजोगुणस्वभावस्त्वां नियोक्ष्यति युद्धेऽवश्यं प्रेरयतीत्यर्थः ॥ ५९ ॥

१ 'मत्परः' इति प्रचलितपाठः, गोण्डलकलकत्तामातृकयोरुपलभ्यते ।

२ '॰मुपाश्रित्य' इति प्रचलितपाठः ।

३ '॰महंकारान्न श्रोष्यसि' इति प्रचलितपाठः, गोण्डलमातृकायां कलकत्तामातृकायां च दृश्यते ।

४ 'मिथ्यैष व्यवसाय॰' इति प्रचलितपाठः । 'मिथ्यैवाध्यवसाय॰' इति गोण्डलपाठः, क्वचिदन्यत्रापि ।

एतदेव स्फुटमाह—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि सन्[1] ॥ ६० ॥

अवशोऽपि सन् मदुपदेशविषयतामनाश्रयन्नपीत्युपालम्भः ॥ ६० ॥

एवं प्रकृतिपरवशतामुपदिश्येश्वराधीनतामप्याह—

ईश्वरः सर्वभूतानां हृद्देशे[2] वसतेऽर्जुन ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

एषोऽस्मिन् प्रकरणे उद्देशलक्षणपरीक्षाभिर्बहुशो निरूपितः ईश्वरः परमात्मा प्राणिनां कर्मविपाकं विदित्वा कर्मफलप्रापणसमर्थः । मायया, दैवी ह्येषा गुणमयी (७।१४) इति लक्षितया तमःप्रचुरयाऽहंकारिक्या प्रकृत्या, पारमेश्वर्या सत्त्वप्रकाशावरणशक्त्या, सर्वाणि भूतानि प्राणिजातानि यन्त्रारूढानि—

रजसा तमसा चैव समाविष्टो भ्रमन्निह ।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते ॥

इत्यादि याज्ञवल्क्यादिस्मरणान्[3]नानायोनिषु परिभ्रामकं संसारचक्रमारूढानि भ्रामयन् स्वस्वकर्मफलभोगार्थं जन्ममरणे पुनःपुनरनुभावयन्, सर्वेषां भूतानां प्राणिनां हृदये, चैतन्याधिकरणे देशे, वसति नित्यमन्तर्यामितया तत्तत्कर्मविपाकं कालस्वरूपेण कलयन् गणयंस्तिष्ठति । अवश्यमेतान् कौरवसैन्यांस्त्वया मारयिष्यतीत्यर्थः ॥ ६१ ॥

तमेव शरणं गच्छ सर्वभावेन पाण्डव ।
तत्प्रसादात्[4] परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

---

१ 'सन्' इति स्थाने 'तत्' इति प्रचलितपाठः, अभिनवगुप्तेनानुसृतः ।

२ 'हृद्देशेऽर्जुन तिष्ठति' इति प्रचलितपाठः । 'हृद्येष वसतेऽर्जुन' इति प्रायः काश्मीरपाठः ।

३ 'याज्ञवल्क्यस्मृति, ३।१४०।

४ 'मत्प्रसादात् परां सिद्धिं' इत्यभिनवगुप्तपाठः । 'तत्प्रसादात् परां सिद्धिं' इति रामकविपाठः ।

तमेवोक्तलक्षणपरीक्षितं चतुरंशात्मकं परमेश्वरं, सर्वेषां मनोवाक्कायानां भावेन सात्त्विकेन स्वकर्मानुष्ठानेन शरणं गच्छ, मद्वचनप्रामाण्येन संसारबन्धमोक्षार्थमाश्रय। तस्य परमेश्वरस्यानुग्रहात् परां शान्तिं शोकमोहादिभिः कृतस्य चित्तविक्षेपस्याभावं, स्थितप्रज्ञत्वं प्राप्स्यसि। स्थितप्रज्ञत्वफलं च शाश्वतं स्थानं परब्रह्मस्वरूपं प्राप्स्यसि ॥ ६२ ॥

एवं निरवशेषेण सर्वं ज्ञानसर्वस्वमुपदिश्य तटस्थीभूय सौहार्देन सप्रणयकोपमिव प्रस्तुतकार्यसिद्धये प्रोत्साहयति —

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि[1] तथा कुरु ॥ ६३ ॥

इति, चेतसा सर्वकर्माणीत्यादि (श्लो० ५७) समनन्तरोक्तप्रकारेण, मया तव गोपनीयादपि परमगोपनीयं कस्यापि न प्रकाशितम्, मम ईश्वरस्य भूभारभूताः क्षत्रिया एतेऽवश्यं संहरणीया इति भविष्यदर्थावबोधनम् आख्यातं सर्वथा प्रकटीकृतम्। एतद्भाविनोऽर्थस्य ज्ञानमशेषेण पूर्वापरार्थानुसंधानेन विमृश्य यथेच्छसि तथा कुरु। अस्मद्वचनमात्रेण न करोषीत्युपालम्भः ॥ ६३ ॥

एवमुपालम्भेन सत्रपमभिमुखीकृत्य निराकाराकृत्या परमेश्वरसामान्येनोक्तपूर्वमपि स्वं साकारमीश्वरं प्रत्यक्षावस्थितं निर्दिशन् प्रेमातिशयेन हृदये संनिवेशयितुं पुनरपि सिद्धान्तयति —

सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमतिस्ततो[2] वक्ष्यामि ते हितम् ॥ ६४ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि[3] सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

पदार्थोऽत्र बहुशो व्याख्यातपूर्वः, वाक्यार्थतस्तु ज्ञानकर्मसमुच्चयानुष्ठा-

---

१ ‘यदिच्छसि’ इति गोण्डलपाठो, रामकविपाठश्च।
२ ‘दृढमिति ततो’ इति प्रचलितपाठो गोण्डलकलकत्तामातृकयोर्दृश्यते।
३ ‘मामेवैष्यसि’ इति पाठः प्रायः सर्वत्रान्यत्र।

नोपदेशोपसंहारोऽयमिति। मे प्रियोऽसि अतस्ते सत्यं प्रतिजाने। अग्रिमश्लोकोद्य[के उच्य]मानां प्रतिज्ञां सत्यां यथार्थामेव करोमि ॥ ६४ ॥ ६५ ॥

प्रतिज्ञामेवाह—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

सर्वधर्मान्, उत्सीदन्ते जातिधर्माः कुलधर्माश्चेति (१।४३) ये त्वया मिथ्यैवाध्यवसिता धर्मास्तान् सर्वान् परित्यज्य तत्फलनाशङ्कां सर्वतस्त्यक्त्वा मामेकं शरणं व्रज। मदुक्तमेवानुतिष्ठ। राग द्वेषाभ्यां विना प्रवृत्तः, स्वजातिविहितमावश्यकं कर्म युद्धं कुर्वाणः, शोकमोहवश्यतां परिहृत्य, मद्वचनानुरूपप्रवृत्तिर्भवेत्यर्थः। अहं त्वां सर्वपापेभ्यः—उत्सन्नकुलधर्माणां नरके नियतं वासः (१।४४) इति संभाविताज्ञरकवासाददृष्टात् पापफलान्मोक्षयिष्यामि। तथा यद्वा जयेम यदि वा नो जयेयुः इति शङ्कितात् पापफलादृष्टाच्च मोक्षयिष्यामि। मा शुचः। शोकाक्रान्तो मा भवेति सर्वप्रकरणार्थोपसंहारोऽयम्। तथा हि— स्त्रीषु दुष्टासु जायते वर्णसंकरः (१।४१) इत्येतत्पापशङ्कामप्याश्चर्यपर्वणि वीरपत्नीनां भर्तृभिः सहान्तर्भावनादपाकरोत्। विजयस्तु पाण्डवानां स्फुटमेव संपादितः। एवं प्रतिज्ञाय, शोकमपाकृत्य, इमं विवस्वते योगं प्रोक्तवानहमव्ययमित्यादि, स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः (४।१) इत्युक्त्वास्य योगस्याव्ययत्वप्रतिपत्तेः, संप्रदायस्य पुरस्तादविच्छेदाय, परेष्वप्युपदेशतामादिशत् ॥ ६६ ॥

तथात्र निरन्तराभ्यासेन परानिष्ठाप्तये—

स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञस्तत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥

---

१ 'त्वा' इति प्रचलितपाठो, गोण्डलमातृकायामुपलभ्यते।

२ अस्य श्लोकस्य प्रायः पाठस्तु—'उत्साद्यन्ते' इत्यादिः।

इति श्रुतेः[1]। अधीत्यार्थस्य विचारः, ज्ञात्वा च तस्यार्थस्य स्वयमनुष्ठानं, शिष्यप्रशिष्यमुखेन परैरप्यनुष्ठापनमिति विधिरित्यर्थानुगमाच्चानुपदेश्योपदेश्यान् दर्शयति—

इदं[2] ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७॥

इदं, उक्तं गीताशास्त्रार्थसर्वस्वम्, वासुदेवः सर्वमिति (७।१९) मम चतुरंशत्वेनैक्यात्म्यज्ञानं नियतकर्मसमुच्चितं श्रेयःसाधनमित्येवंरूपम्। अतपस्काय प्रोक्तकर्मनिष्ठामननुतिष्ठते पुरुषाय, ते त्वया कदाचन न वाच्यम्। एवमभक्ताय। आर्तो जिज्ञासुरर्थार्थी (७।१६) इत्यादिप्रकारकभक्तिहीनाय न वाच्यम्। यश्च मामभ्यसूयति—यादवेषु लब्धजन्मनानेन केनापि सामान्यजीवेन स्वाभिप्रायेण निजप्रतिष्ठापरप्रतारणाद्यर्थमिदमुक्तमित्येवमासुरीं प्रकृतिं श्रितः यो मां द्वेष्टि तस्मै, अश्रद्धानाय च कदाचिन्न वाच्यम्। अत्र पौनःपुन्येन निषेधावृत्त्या वीप्सया व्यतिरेकादिदमुपदिष्टम्। तपस्विने भक्ताय शुश्रूषवे मयि श्रद्धावते सात्त्विकाय देवप्रकृतयेऽवश्यं वाच्यमिति ॥ ६७॥

एतदेवाह—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
मयि भक्तिं[3] परां कृत्वा स मामेष्यत्यसंशयम्[4] ॥ ६८॥

यः इमं परमं गुह्यं गीताशास्त्रार्थतत्त्वम्। मद्भक्तेष्विति लक्षणात्। तपस्व्यादिषूक्तलक्षणेषु ज्ञाननिष्ठाप्राप्तयेऽभिधास्यति। अध्ययनार्थावरोधादिद्वारेणोपदेक्ष्यति। स मयि भक्तिं परां कृत्वा, उक्तश्रुत्यर्थानुगमेन स्वस्य परेषां च निष्ठां प्रापय्य, निःसंदेहं मामेष्यति, मयि परमात्मस्वरूपे समापद्यते ॥ ६८॥

---

१ निरुक्त, १।१८; संहितोपनिषद्ब्राह्मण, ३।
२ 'इदं' इति पाठः प्रायः सर्वत्रान्यत्र। शाङ्करपाठस्तु 'इमं' इति।
३ 'भक्तिं मयि' इति पाठः प्रायः सर्वत्रान्यत्र।
४ '॰त्यसंशयः' इति प्रचलितपाठः, अभिनवगुप्तेनानुसृतः।

एनं स्तौति—

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

यः स्वयं गीतार्थतत्त्वाभ्यासेन परां निष्ठां प्राप्तः, परानपि मद्भक्तानध्ययनादिक्रमेण यथावज्ज्ञानोपदेशेनोपकरोति । तस्मात् पुरुषधौरेयात् सर्वमनुष्येषु मध्ये कश्चिदन्योऽतिशयेन प्रियकारी नास्ति । मद्भक्तजना हि ममात्मभूताः । तेषां यः प्रियं करोति तेन सर्वथा ममैव प्रियं कृतमित्यर्थः । अस्य फलमाह । तस्मान्ममात्मभक्तजनोपकारकादन्यः भुवि मे प्रियतरो न च भविता । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः (७ । १७) इत्येतत् सिद्धान्तितम् ॥ ६९ ॥

अस्य शास्त्रस्य पदपदार्थावबोधादिद्वारा ज्ञाननिष्ठा तावदास्तामेतदक्षरपाठोऽपि महाफल इत्युपदिशति—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

धर्म्यं वर्णाश्रमधर्मरक्षणे हितम् ॥ ७० ॥

ये त्वध्ययनेऽप्यनधिकारिणः स्त्रीशूद्रादयः तेषामप्युपकारकमिदमित्याह—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात् पुण्यकर्मणाम् ॥ ७१ ॥

अत्रैष वाक्यार्थः । अस्मिन् जन्मनि एतच्छ्रवणमात्रात् पुण्यकर्मणां लोकान् प्राप्य, जन्मान्तरे ह्येतदध्ययनार्थावबोधज्ञानाधिकारमाप्तो मुक्तः स्यादिति ॥ ७१ ॥

तदेवमियता शास्त्रेण ज्ञानकर्मसमुच्चयानुष्ठानैकनिमित्ता निःश्रेयसैकनिष्ठेति भगवान् यदुपदिष्टवान् तस्य सम्यगवबोधजिज्ञासयार्जुनमिष्टप्रश्नेन पृच्छति—

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्र्येण चेतसा ।
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनंजय ॥ ७२ ॥

हे पार्थ, पैतृस्वस्रेयत्वेन स्नेहप्रकाशनम् । त्वयैकाग्र्येण सावधानेन चेतसा एतत्प्रकरणप्रतिपादितं ज्ञानकर्मसमुच्चयानुष्ठानरूपमुपदेशसर्वस्वमिदं कच्चिच्छ्रुतम्, किं परमार्थतोऽवधारितम् । कच्चिदितीष्टप्रश्ने । अज्ञानसंमोहः अज्ञानादेहदेहिनोस्तत्त्वाप्रतिपत्तेः संजातः संमोहः, प्रथमाध्यायोक्तिक्रमेण क्षत्रियाणां सहजस्यावश्यानुष्ठेयस्य कर्मणो युद्धाख्यस्याकरणायाप्रवृत्तिलक्षणं विपर्ययज्ञानं, कच्चिन्नष्टः प्रकर्षेण पुनरनुत्पत्त्या अत्यन्ताभावं प्राप्तः, हे धनंजय, नो वा पुनरुपदिशामीत्यर्थः ॥ ७२ ॥

अत्र प्रत्युत्तरम्—

अर्जुन उवाच ।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥

हे अच्युत, मोहः अनात्मन्यात्मबुद्धिः प्रथमाध्यायोक्तकश्मलहेतुः नष्टः । त्वत्प्रसादात् परमार्थोपदेशलक्षणात् तवानुग्रहात् स्मृतिः लब्धा, प्रोक्तपरमात्मस्वरूपानुसंधानं प्राप्तम् । अत एव गतसंदेहः स्थितोऽस्मि । यद्वशाद्धर्म्यमपि युद्धं अधर्मं मन्यमानो निरुत्साहोऽभवं स संशयो गत इत्यर्थः । तव परमेश्वरस्य वचनमनुल्लङ्घनीयं स्वकर्मणो युद्धस्यानुष्ठानात्मकं निःश्रेयसप्राप्तिफलं करिष्ये संपादयिष्यामि ॥ ७३ ॥

एवं श्रीकृष्णार्जुनसंवादद्वारा परमात्मज्ञानमुपसंहरन् प्रस्तुतकथाप्रसङ्गमनुसंदधानः —

संजय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

स्पष्टम् ॥

अद्भुतस्यास्य परमार्थरहस्यस्य श्रवणाधिकारप्राप्तिमाह—

**व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम् ।**
**योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ॥७५॥**[3]

योगं, यथावत्प्रतिपादितज्ञाननिष्ठतया स्वकर्मानुष्ठानलक्षणं, चित्त-
३ निरोधलक्षणं च । अर्जुनं प्रति कथयतः साक्षाद्योगेश्वराद्योगस्यास्य
द्विविधस्येश्वरात् प्रवर्तकात् कृष्णादेतद्रहस्यमहं स्वयमात्मनैव श्रुतवा-
नस्मीत्यन्वयः ॥

अथ स्वपरजयपराजयाभिप्रायेण धृतराष्ट्रे यदपृच्छत् तन्निश्चय-
माह—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७६ ॥**

३ कृष्णः साक्षान्नारायणो यत्र योगेश्वरः, योगस्य, कार्यकरणयोर-
भेदन्यायात्, योगसाध्यानाम्—अन्तर्धानं स्मृतिः कान्तिरित्यादीनां
याज्ञवल्क्यादिप्रोक्तानां—सिद्धीनां बहुशो वैश्वरूप्यदर्शनेषु श्रुतदृष्ट-
६ पूर्वाणामीश्वरः संपादकः । अत एव च योगानां, पाण्डवानां जयार्थं

---

१ 'एतद्गुह्यमहं परम्' इति प्रायः शाङ्करपाठः । 'एतद्गुह्यतरं महत्' इति अभिनवगुप्तस्य, गोण्डलमातृकायां च पाठः ।

२ 'योगीश्वरात्' इति प्रायः काश्मीरपाठः ।

३ अत ऊर्ध्वं द्वौ श्लोकौ अत्र पाठेऽनुपलब्धौ, तौ यथा—

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥
तच्च संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥

४ 'योगीश्वरः' इति रामकव्यभिनवगुप्तयोः पाठः ।

५ 'स्थिरा' इति रामकविपाठः ।

६ 'इति मतिर्मम' इति गोण्डलपाठः ।

७ द्रष्टव्या २०९ पृष्ठे तृतीया टिप्पणिका ।

युक्तीनां, संपादकः, तथैव तेषु परप्रयुक्तानामुपद्रवयुक्तीनां निग्राहकश्च यत्रास्ति । तथा पार्थः । पृथायां मुनिप्रसादेनेन्द्राज्जातः नरावतारोऽर्जुनः । धनुर्धरः धनुर्निवातकवचादिवधेष्वप्रतिहतं विजयसाधनं गाण्डीवाख्यं चापं धारयन्, पाशुपतास्त्रप्रयोक्तास्ति । तत्र, एवं नरनारायणपरिपालिते युधिष्ठिरपक्षे । श्रीः सर्वार्थसंपत्तिः । विजयः सकलविपक्षक्षपणादुत्कर्षातिशयः । भूतिरनवच्छिन्ना पुत्रपौत्रादिसत्ता । तथा ध्रुवा चिरस्थायिनी नीतिः । अर्थतो राजनीतिसंभवा कीर्तिश्च स्यात् । मम, प्रत्यक्षीकृतकृष्णार्जुनप्रभावस्य, एवं मे मतिर्निश्चय इति सिद्धम् ॥ ७६ ॥

उपदिष्टं चैतद्गीतासारसर्वस्वं काव्यालापेनापि गुरुवरैः —

सम्यग्दर्शनभूमिकासु समधीविध्वस्तवादग्रहः
प्राक्कर्मार्जितदेशजातिविभवैः कुर्वन् सरूपाः स्थितीः ।
द्वन्द्वानीह हठागतानि शमयन् प्रत्याहृतेश्चेतसो
जीवन्मुक्तिमहो गृहेऽपि निवसन् कश्चिद्विपश्चिच्छ्रयेत् ॥ १ ॥

गेहं चेन्मुदितातिथि प्रमुदिताहीनेन शून्येन किं
भोज्यं चेदमृतात्मदीनवचसां किं शिक्षया भिक्षया ।
श्रद्धाभक्तिपुरःसरं नवनवोद्योगप्रमोदाकुलं
कार्यं चेत् प्रलयोपमेन जडतावेगेन योगेन किम् ॥ २ ॥

ज्ञानं चेदविवादशास्त्रजनितं किं तन्निरालम्बनं
खेदात् तत्त्वविनिश्चयो यदि मुधा मौनं न संप्रार्थ्यते ।
कर्म स्याद्यदि वासनाविरहितं निर्वाणपारायणं
नैष्कर्म्ये हठसाहसात्मनि मुधा मूढैः कथं खिद्यते ॥ ३ ॥

गार्हस्थ्यं स्वपरोपकारि यदि तत् तुर्याश्रमे को ग्रहः
सत्सङ्गो यदि लभ्यते वनमृगैः सार्धं स्थितौ को गुणः ।
अक्षुब्धं सुखदुःखयोर्यदि सदा चित्तं तदा किं धनै-
र्दोषाश्चेद्विरता रतिर्न कतरा स्यान्निर्जनावर्जने ॥ ४ ॥

न्यायोपायबलेन वृत्तिरथ किं द्वन्द्वानुभूतौ हठो

नित्यं चेन्नियतं तदातिविषमैः किं कृच्छ्रचान्द्रायणैः ।

स्नानाद्याः सकलाः क्रिया यदि सदा देवीं वितस्तां श्रिता
नित्यव्याहृतिकारिणा त्रिभुवने तीर्थाटनेनापि किम् ॥ ५ ॥

बुद्धिश्चेत् स्वरसेन सत्त्वबहुला किं कन्दमूलाशनै-
र्लब्धे ज्योतिषि गाढमन्धतमसैस्तत् किं गुहामण्डपैः ।
मैत्राद्यैः परिकर्मभिः परिचितैश्चेतः प्रसन्नं यदि
प्राणायामकदर्थनाभिरभितस्तत् किं मुधा खिद्यसे ॥ ६ ॥

वागादित्रितयं यतं यदि तदा कोऽर्थस्त्रिदण्डग्रहे
रागश्चेद्धृदयादवैति तदलं काषायक्लृप्त्या बहिः ।
छिन्नं चेद्भवमूलमेकमपि कश्छिन्नैः शिखाद्यैर्गुणो
नो चेदात्मविडम्बनैर्विरचितैः किं शाम्भराडम्बरैः ॥ ७ ॥

लब्धं षड्गुणमान्तरं गतमलं तद्ब्रह्मसूत्रं यदा
बाह्ये कोऽतिभरस्तदेवमपि यद्वेवाकतन्त्रोच्यते ।
क्लेशाश्चेद्विहृताः किमेवमफलैः केशैः समुल्लुञ्चितै-
र्बाह्यप्रक्रिययैव केवलमलं बालः समाश्वस्यते ॥ ८ ॥

इति शुभम् ॥

संख्याते द्विजराजसिद्धधृषिवरोपायैः(४७८१)कलेर्हायने
लोके सप्तगुणर्षिरूपक(१७३७)मिते काले शकन्ने सति ।
आनन्दस्य कृतिः श्रुतिस्मृतिमिता गीता गिरां पञ्चकात्[1]
कर्मज्ञानसमुच्चयोदयधिया भूयाच्छिवप्रीतये ॥

॥ शुभम् ॥

इति श्रीमद्भगवद्गीताटीकायां
ज्ञानकर्मसमुच्चयाख्यायामानन्दवर्धिन्यां
॥ अष्टादशोऽध्यायः ॥ १८ ॥

॥ इति श्रीमद्भगवद्गीता संपूर्णा ॥

---

१ पञ्चनददेशस्थो नदीविशेषः ।

# प्रथमं परिशिष्टम्

## आनन्दवर्धिन्यामुद्धृतानां ग्रन्थानां ग्रन्थकृतां च सूचिः

[ प्रथममध्यायः, ततः श्लोकः, ततः टीकापङ्क्तिः ]

# द्वितीयं परिशिष्टम्

## शाङ्करकाश्मीरपाठयोः

## तुलनापत्रम्

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | ॥ अध्यायः १ ॥ | |
| | धर्मक्षेत्रे कुरुक्षेत्रे | |
| सर्वक्षत्रसमागमे । | | समवेता युयुत्सवः । |
| | मामकाः पाण्डवाश्चैव | |
| | किमकुर्वत संजय ॥ १ ॥ | |
| | दृष्ट्वा तु पाण्डवानीकं | |
| | व्यूढं दुर्योधनस्तदा । | |
| | आचार्यमुपसंगम्य | |
| | राजा वचनमब्रवीत् ॥ २ ॥ | |
| | पश्यैतां पाण्डुपुत्राणा- | |
| | माचार्य महतीं चमूम् । | |
| | व्यूढां द्रुपदपुत्रेण | |
| | तव शिष्येण धीमता ॥ ३ ॥ | |
| | अत्र शूरा महेष्वासा | |
| | भीमार्जुनसमा युधि । | |
| | युयुधानो विराटश्च | |
| | द्रुपदश्च महारथः ॥ ४ ॥ | |
| | धृष्टकेतुश्चेकितानः | |
| | काशिराजश्च वीर्यवान् । | |
| | पुरुजित्कुन्तिभोजश्च | |
| | शैब्यश्च नरपुंगवः ॥ ५ ॥ | |
| | युधामन्युश्च विक्रान्त | |
| | उत्तमौजाश्च वीर्यवान् । | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | सौभद्रो द्रौपदेयाश्च | |
| | सर्वे एव महारथाः ॥ ६ ॥ | |
| | अस्माकं तु विशिष्टा ये | |
| | तान् निबोध द्विजोत्तम । | |
| नायकान् मम सैन्यस्य | | नायका मम सैन्यस्य |
| | संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥ | |
| सैन्ये महति ये सर्वे | | |
| नेतारः शूरसंमताः । ७ [* ½] | | |
| | भवान् भीष्मश्च कर्णश्च | |
| कृपः शल्यो जयद्रथः । | | कृपश्च समितिंजयः । |
| | अश्वत्थामा विकर्णश्च | |
| सौमदत्तिश्च वीर्यवान् ॥ ८ ॥ | | सौमदत्तिस्तथैव च ॥ ८ ॥ |
| | अन्ये च बहवः शूरा | |
| | मदर्थे त्यक्तजीविताः । | |
| | नानाशस्त्रप्रहरणाः | |
| नानायुद्धविशारदाः ॥ ९ ॥ | | सर्वे युद्धविशारदाः ॥ ९ ॥ |
| | अपर्याप्तं तदस्माकं | |
| बलं भीमाभिरक्षितम् । | | बलं भीष्माभिरक्षितम् । |
| | पर्याप्तं त्विदमेतेषां | |
| बलं भीष्माभिरक्षितम् ॥ १० ॥ | | बलं भीमाभिरक्षितम् ॥ १० ॥ |
| अयनेषु तु सर्वेषु | | अयनेषु च सर्वेषु |
| | यथाभागमवस्थिताः । | |
| | भीष्ममेवाभिरक्षन्तु | |
| | भवन्तः सर्वे एव हि ॥ ११ ॥ | |
| | तस्य संजनयन् हर्षं | |
| | कुरुवृद्धः पितामहः । | |
| | सिंहनादं विनद्योच्चैः | |
| | शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥ | |

  

| काश्मीरपाठः। | साधारणपाठः। | शाङ्करपाठः। |
|---|---|---|
| | ततः शङ्खाश्च भेर्यश्च<br>पणवानकगोमुखाः।<br>सहसैवाभ्यहन्यन्त<br>स शब्दस्तुमुलोऽभवत् ॥ १३ ॥ | |
| | ततः श्वेतैर्हयैर्युक्ते<br>महति स्यन्दने स्थितौ।<br>माधवः पाण्डवश्चैव<br>दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥ | |
| | पाञ्चजन्यं हृषीकेशो<br>देवदत्तं धनंजयः।<br>पौण्ड्रं दध्मौ महाशङ्खं<br>भीमकर्मा वृकोदरः ॥ १५ ॥ | |
| | अनन्तविजयं राजा<br>कुन्तीपुत्रो युधिष्ठिरः।<br>नकुलः सहदेवश्च<br>सुघोषमणिपुष्पकौ ॥ १६ ॥ | |
| | काश्यश्च परमेष्वासः<br>शिखण्डी च महारथः।<br>धृष्टद्युम्नो विराटश्च<br>सात्यकिश्चापराजितः ॥ १७ ॥ | |
| पाञ्चालश्च महेष्वासो<br>द्रौपदेयाश्च पञ्च ये। | | द्रुपदो द्रौपदेयाश्च<br>सर्वशः पृथिवीपते। |
| | सौभद्रश्च महाबाहुः<br>शङ्खान् दध्मुः पृथक् पृथक् ॥ १८ ॥ | |
| | स घोषो धार्तराष्ट्राणां<br>हृदयानि व्यदारयत्।<br>नभश्च पृथिवीं चैव | |
| तुमुलो व्यनुनादयत् ॥ १९ ॥ | | तुमुलो व्यनुनादयन् ॥ १९ ॥ |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | अथ व्यवस्थितान् दृष्ट्वा | |
| | धार्तराष्ट्रान् कपिध्वजः । | |
| | प्रवृत्ते शस्त्रसंपाते | |
| | धनुरुद्यम्य पाण्डवः ॥२०॥ | |
| | हृषीकेशं तदा वाक्य- | |
| | मिदमाह महीपते । | |
| उभयोः सेनयोर्मध्ये | | सेनयोरुभयोर्मध्ये |
| | रथं स्थापय मेऽच्युत ॥ २१ ॥ | |
| | यावदेतान् निरीक्षेऽहं | |
| | योद्धुकामानवस्थितान् । | |
| | कैर्मया सह योद्धव्य- | |
| | मस्मिन् रणसमुद्यमे ॥ २२ ॥ | |
| | योत्स्यमानानवेक्षेऽहं | |
| | य एतेऽत्र समागताः । | |
| धृतराष्ट्रस्य दुर्बुद्धे- | | धार्तराष्ट्रस्य दुर्बुद्धे- |
| | र्युद्धे प्रियचिकीर्षवः ॥ २३ ॥ | |
| | एवमुक्तो हृषीकेशो | |
| | गुडाकेशेन भारत । | |
| उभयोः सेनयोर्मध्ये | | सेनयोरुभयोर्मध्ये |
| | स्थापयित्वा रथोत्तमम् ॥ २४ ॥ | |
| | भीष्मद्रोणप्रमुखतः | |
| | सर्वेषां च महीक्षिताम् । | |
| | उवाच पार्थ पश्यैतान् | |
| | समवेतान् कुरूनिति ॥ २५ ॥ | |
| | तत्रापश्यत् स्थितान् पार्थः | |
| | पितॄनथ पितामहान् । | |
| | आचार्यान् मातुलान् भ्रातॄन् | |
| | पुत्रान् पौत्रान् सखींस्तथा ॥२६॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | श्वशुरान् सुहृदश्चैव | |
| | सेनयोरुभयोरपि । | |
| | तान् समीक्ष्य स कौन्तेयः | |
| | सर्वान् बन्धूनवस्थितान् ॥ २७ ॥ | |
| कृपया परयाविष्टः | | कृपया परयाविष्टो |
| सीदमानोऽब्रवीदिदम् । | | विषीदन्निदमब्रवीत् । |
| दृष्ट्वेमान् स्वजनान् कृष्ण | | दृष्ट्वेमं स्वजनं कृष्ण |
| युयुत्सून् समुपस्थितान् ॥ २८ ॥ | | युयुत्सुं समुपस्थित् ॥ २८ ॥ |
| सीदन्ति सर्वगात्राणि | | सीदन्ति मम गात्राणि |
| | मुखं च परिशुष्यति । | |
| | वेपथुश्च शरीरे मे | |
| | रोमहर्षश्च जायते ॥ २९ ॥ | |
| स्रंसते गाण्डिवं हस्तात् | | गाण्डीवं स्रंसते हस्तात् |
| | त्वक् चैव परिदह्यते । | |
| | न च शक्नोम्यवस्थातुं | |
| | भ्रमतीव च मे मनः ॥ ३० ॥ | |
| | निमित्तानि च पश्यामि | |
| | विपरीतानि केशव । | |
| | न च श्रेयोऽनुपश्यामि | |
| हत्वाहवे स्वबान्धवान् ॥ ३१ ॥ | | हत्वा स्वजनमाहवे ॥ ३१ ॥ |
| | न काङ्क्षे विजयं कृष्ण | |
| न राज्यं न सुखानि च । | | न च राज्यं सुखानि च । |
| | किं नो राज्येन गोविन्द | |
| | किं भोगैर्जीवितेन वा ॥ ३२ ॥ | |
| | येषामर्थे काङ्क्षितं नो | |
| | राज्यं भोगाः सुखानि च । | |
| त एवेमे स्थिता योद्धुं | | त इमेऽवस्थिता युद्धे |
| प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ ३३ ॥ | | प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥ |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
| --- | --- | --- |
| | आचार्याः पितरः पुत्रा- | |
| | स्तथैव च पितामहाः । | |
| | मातुलाः श्वशुराः पौत्राः | |
| | स्यालाः संबन्धिनस्तथा ॥ ३४ ॥ | |
| | एतान् न हन्तुमिच्छामि | |
| | घ्नतोऽपि मधुसूदन । | |
| | अपि त्रैलोक्यराज्यस्य | |
| हेतोः किमु महीकृते ॥ ३५ ॥ | | हेतोः किं नु महीकृते ॥ ३५ ॥ |
| | निहत्य धार्तराष्ट्रान् नः | |
| | का प्रीतिः स्याज्जनार्दन । | |
| | पापमेवाश्रयेदस्मान् | |
| | हत्वैतानाततायिनः ॥ ३६ ॥ | |
| | तस्मान्नार्हा वयं हन्तुं | |
| धार्तराष्ट्रान् सबान्धवान् । | | धार्तराष्ट्रान् स्वबान्धवान् । |
| स्वजनान् हि कथं हत्वा | | स्वजनं हि कथं हत्वा |
| | सुखिनः स्याम माधव ॥ ३७ ॥ | |
| | यद्यप्येते न पश्यन्ति | |
| | लोभोपहतचेतसः । | |
| | कुलक्षयंकृतं दोषं | |
| | मित्रद्रोहे च पातकम् ॥ ३८ ॥ | |
| | कथं न ज्ञेयमस्माभिः | |
| | पापादस्मान्निवर्तितुम् । | |
| | कुलक्षयकृतं दोषं | |
| संपश्यद्भिर्जनार्दन ॥ ३९ ॥ | | प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥ |
| | कुलक्षये प्रणश्यन्ति | |
| | कुलधर्माः सनातनाः । | |
| | धर्मे नष्टे कुलं कृत्स्न- | |
| | मधर्मोऽभिभवत्युत ॥ ४० ॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | अधर्माभिभवात् कृष्ण | |
| | प्रदुष्यन्ति कुलस्त्रियः । | |
| | स्त्रीषु दुष्टासु वार्ष्णेय | |
| | जायते वर्णसंकरः ॥ ४१ ॥ | |
| | संकरो नरकायैव | |
| | कुलघ्नानां कुलस्य च । | |
| | पतन्ति पितरो ह्येषां | |
| | लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥ | |
| | दोषैरेतैः कुलघ्नानां | |
| | वर्णसंकरकारकैः । | |
| उत्साद्यते जातिधर्मः | | उत्साद्यन्ते जातिधर्माः |
| कुलधर्मश्च शाश्वतः ॥ ४३ ॥ | | कुलधर्माश्च शाश्वताः ॥ ४३ ॥ |
| | उत्सन्नकुलधर्माणां | |
| | मनुष्याणां जनार्दन । | |
| | नरके नियतं वासो | |
| | भवतीत्यनुशुश्रुम ॥ ४४ ॥ | |
| | अहो बत महत् पापं | |
| | कर्तुं व्यवसिता वयम् । | |
| | यद्राज्यसुखलोभेन | |
| स्वजनान् हन्तुमुद्यताः ॥ ४५ ॥ | | हन्तुं स्वजनमुद्यताः ॥ ४५ ॥ |
| | यदि मामप्रतीकार- | |
| | मशस्त्रं शस्त्रपाणयः । | |
| | धार्तराष्ट्रा रणे हन्यु- | |
| | स्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥ | |
| | एवमुक्त्वार्जुनः संख्ये | |
| शोकसंविग्नमानसः । | | रथोपस्थ उपाविशत् । |
| उत्सृज्य सशरं चापं | | विसृज्य सशरं चापं |
| रथोपस्थ उपाविशत् ॥ ४७ ॥ | | शोकसंविग्नमानसः ॥ ४७ ॥ |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
| --- | --- | --- |

## ॥ अध्यायः २ ॥

| | | |
| --- | --- | --- |
| | तं तथा कृपयाविष्ट- | |
| | मश्रुपूर्णाकुलेक्षणम् । | |
| सीदमानमिदं वाक्य- | | विषीदन्तमिदं वाक्य- |
| | मुवाच मधुसूदनः ॥ १ ॥ | |
| कुतस्त्वां कश्मलमिदं | | कुतस्त्वा कश्मलमिदं |
| | विषमे समुपस्थितम् । | |
| | अनार्यजुष्टमस्वर्ग्य- | |
| | मकीर्तिकरमर्जुन ॥ २ ॥ | |
| मा क्लैब्यं गच्छ कौन्तेय | | क्लैब्यं मा स्म गमः पार्थ |
| | नैतत् त्वय्युपपद्यते । | |
| | क्षुद्रं हृदयदौर्बल्यं | |
| | त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥ | |
| | कथं भीष्ममहं संख्ये | |
| | द्रोणं च मधुसूदन । | |
| | इषुभिः प्रतियोत्स्यामि | |
| | पूजार्हावरिसूदन ॥ ४ ॥ | |
| | गुरुनहत्वा हि महानुभावा- | |
| ञ्छ्रेयश्चर्तुं भैक्ष्यमपीह लोके । | | ञ्छ्रेयो भोक्तुं भैक्षमपीह लोके । |
| न त्वर्थकामस्तु गुरून् निहत्य | | हत्वार्थकामांस्तु गुरूनिहैव |
| | भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥ | |
| | न चैतद्विद्मः कतरन्नो गरीयो | |
| | यद्वा जयेम यदि वा नो जयेयुः । | |
| | यानेव हत्वा न जिजीविषाम- | |
| स्ते नः स्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥ | | स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥ |
| | कार्पण्यदोषोपहतस्वभावः | |
| | पृच्छामि त्वां धर्मसंमूढचेताः । | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे | |
| | शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥ | |
| | न हि प्रपश्यामि ममापनुद्या- | |
| द्यः शोकमुच्छोषणमिन्द्रियाणाम् । | | द्यच्छोकमुच्छोषणमिन्द्रियाणाम् । |
| | अवाप्य भूमावसपत्नमृद्धं | |
| | राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥ | |
| | एवमुक्त्वा हृषीकेशं | |
| गुडाकेशः परंतप । | | गुडाकेशः परंतपः । |
| न योत्स्यामीति गोविन्द- | | न योत्स्य इति गोविन्द- |
| | मुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥ | |
| | तमुवाच हृषीकेशः | |
| | प्रहसन्निव भारत । | |
| | सेनयोरुभयोर्मध्ये | |
| सीदमानमिदं वचः ॥ १० ॥ | | विषीदन्तमिदं वचः ॥ १० ॥ |
| त्वं मानुष्येणोपहतान्तरात्मा | | |
| विषादमोहाभिभवाद्विसंज्ञः । | | |
| कृपागृहीतः समवेक्ष्य बन्धू- | | |
| नभिप्रपन्नान् मुखमन्तकस्य ॥ १० [*१] ॥ | | |
| अशोच्याननुशोचंस्त्वं | | अशोच्यानन्वशोचस्त्वं |
| प्राज्ञवन्नाभिभाषसे । | | प्रज्ञावादांश्च भाषसे । |
| | गतासूनगतासूंश्च | |
| | नानुशोचन्ति पण्डिताः ॥ ११ ॥ | |
| न ह्येवाहं जातु नासं | | न त्वेवाहं जातु नासं |
| न त्वं नामी जनाधिपाः । | | न त्वं नेमे जनाधिपाः । |
| | न चैव न भविष्यामः | |
| सर्वे वयमितः परम् ॥ १२ ॥ | | सर्वे वयमतः परम् ॥ १२ ॥ |
| | देहिनोऽस्मिन् यथा देहे | |
| | कौमारं यौवनं जरा । | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | तथा देहान्तरप्राप्ति-<br>र्धीरस्तत्र न मुह्यति ॥ १३ ॥ | |
| | मात्रास्पर्शास्तु कौन्तेय<br>शीतोष्णसुखदुःखदाः ।<br>आगमापायिनोऽनित्या-<br>स्तांस्तितिक्षस्व भारत ॥ १४ ॥ | |
| | यं हि न व्यथयन्त्येते<br>पुरुषं पुरुषर्षभ ।<br>समदुःखसुखं धीरं<br>सोऽमृतत्वाय कल्पते ॥ १५ ॥ | |
| | नासतो विद्यते भावो<br>नाभावो विद्यते सतः ।<br>उभयोरपि दृष्टोऽन्त-<br>स्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥ | |
| | अविनाशि तु तद्विद्धि<br>येन सर्वमिदं ततम् ।<br>विनाशमव्ययस्यास्य<br>न कश्चित् कर्तुमर्हति ॥ १७ ॥ | |
| | अन्तवन्त इमे देहा<br>नित्यस्योक्ताः शरीरिणः । | |
| विनाशिनोऽप्रमेयस्य | | अनाशिनोऽप्रमेयस्य |
| | तस्माद्युध्यस्व भारत ॥ १८ ॥ | |
| | य एनं वेत्ति हन्तारं<br>यश्चैनं मन्यते हतम् ।<br>उभौ तौ न विजानीतो<br>नायं हन्ति न हन्यते ॥ १९ ॥ | |
| | न जायते म्रियते वा कदाचि-<br>न्नायं भूत्वा भविता वा न भूयः | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | अजो नित्यः शाश्वतोऽयं पुराणो | |
| | न हन्यते हन्यमाने शरीरे ॥ २० ॥ | |
| | वेदाविनाशिनं नित्यं | |
| | य एनमजमव्ययम् । | |
| | कथं स पुरुषः पार्थ | |
| हन्यते हन्ति वा कथम् ॥ २१ ॥ | | कं घातयति हन्ति कम् ॥ २१ ॥ |
| | वासांसि जीर्णानि यथा विहाय | |
| | नवानि गृह्णाति नरोऽपराणि । | |
| | तथा शरीराणि विहाय जीर्णा- | |
| | न्यन्यानि संयाति नवानि देही ॥ २२ ॥ | |
| | नैनं छिन्दन्ति शस्त्राणि | |
| | नैनं दहति पावकः । | |
| | न चैनं क्लेदयन्त्यापो | |
| | न शोषयति मारुतः ॥ २३ ॥ | |
| | अच्छेद्योऽयमदाह्योऽय- | |
| | मक्लेद्योऽशोष्य एव च । | |
| | नित्यः सर्वगतः स्थाणु- | |
| | रचलोऽयं सनातनः ॥ २४ ॥ | |
| | अव्यक्तोऽयमचिन्त्योऽय- | |
| | मविकार्योऽयमुच्यते । | |
| | तस्मादेवं विदित्वैनं | |
| | नानुशोचितुमर्हसि ॥ २५ ॥ | |
| अथ वैनं नित्यजातं | | अथ चैनं नित्यजातं |
| | नित्यं वा मन्यसे मृतम् । | |
| | तथापि त्वं महाबाहो । | |
| | नैनं शोचितुमर्हसि ॥ २६ ॥ | |
| जातस्य हि ध्रुव मृत्यु- | | जातस्य हि ध्रुवो मृत्यु- |
| | ध्रुवं जन्म मृतस्य च । | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | तस्मादपरिहार्येऽर्थे | |
| | न त्वं शोचितुमर्हसि ॥ २७ ॥ | |
| | अव्यक्तादीनि भूतानि | |
| | व्यक्तमध्यानि भारत । | |
| | अव्यक्तनिधनान्येव | |
| | तत्र का परिदेवना ॥ २८ ॥ | |
| | आश्चर्यवत् पश्यति कश्चिदेन- | |
| आश्चर्यवद्वदति तथैनमन्यः । | | माश्चर्यवद्वदति तथैव चान्यः । |
| | आश्चर्यवच्चैनमन्यः शृणोति | |
| | श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥ | |
| | देही नित्यमवध्योऽयं | |
| | देहे सर्वस्य भारत । | |
| | तस्मात् सर्वाणि भूतानि | |
| नानुशोचितुमर्हसि ॥ ३० ॥ | | न त्वं शोचितुमर्हसि ॥ ३० ॥ |
| | स्वधर्ममपि चावेक्ष्य | |
| न प्रकम्पितुमर्हसि । | | न विकम्पितुमर्हसि । |
| | धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् | |
| | क्षत्रियस्य न विद्यते ॥ ३१ ॥ | |
| | यदृच्छया चोपपन्नं | |
| | स्वर्गद्वारमपावृतम् । | |
| सुकृतात् क्षत्रियाः पार्थ | | सुखिनः क्षत्रियाः पार्थ |
| | लभन्ते युद्धमीदृशम् ॥ ३२ ॥ | |
| अथ चेत् त्वं धर्म्यमिमं | | अथ चेत् त्वमिमं धर्म्यं |
| | संग्रामं न करिष्यसि । | |
| | ततः स्वधर्मं कीर्तिं च | |
| | हित्वा पापमवाप्स्यसि ॥ ३३ ॥ | |
| | अकीर्तिं चापि भूतानि | |
| | कथयिष्यन्ति तेऽव्ययाम् । | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | संभावितस्य चाकीर्ति- | |
| | र्मरणादतिरिच्यते ॥ ३४ ॥ | |
| | भयाद्रणादुपरतं | |
| | मंस्यन्ते त्वां महारथाः । | |
| एषां च त्वं बहुमतो | | येषां च त्वं बहुमतो |
| | भूत्वा यास्यसि लाघवम् ॥ ३५ ॥ | |
| | अवाच्यवादांश्च बहून् | |
| | वदिष्यन्ति तवाहिताः । | |
| | निन्दन्तस्तव सामर्थ्यं | |
| | ततो दुःखतरं नु किम् ॥ ३६ ॥ | |
| | हतो वा प्राप्स्यसि स्वर्गं | |
| | जित्वा वा भोक्ष्यसे महीम् । | |
| | तस्मादुत्तिष्ठ कौन्तेय | |
| | युद्धाय कृतनिश्चयः ॥ ३७ ॥ | |
| | सुखदुःखे समे कृत्वा | |
| | लाभालाभौ जयाजयौ । | |
| | ततो युद्धाय युज्यस्व | |
| | नैवं पापमवाप्स्यसि ॥ ३८ ॥ | |
| | एषा तेऽभिहिता सांख्ये | |
| | बुद्धिर्योगे त्विमां शृणु । | |
| | बुद्ध्या युक्तो यया पार्थ | |
| | कर्मबन्धं प्रहास्यसि ॥ ३९ ॥ | |
| नेहातिक्रमनाशोऽस्ति | | नेहाभिक्रमनाशोऽस्ति |
| प्रत्यवायो न दृश्यते । | | प्रत्यवायो न विद्यते । |
| | स्वल्पमप्यस्य धर्मस्य | |
| | त्रायते महतो भयात् ॥ ४० ॥ | |
| | व्यवसायात्मिका बुद्धि- | |
| रेकैव कुरुनन्दन । | | रेकेह कुरुनन्दन । |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
| --- | --- | --- |
| | बहुशाखा ह्यनन्ताश्च | |
| | बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥ | |
| | यामिमां पुष्पितां वाचं | |
| | प्रवदन्त्यविपश्चितः । | |
| वेदवादपराः पार्थ | | वेदवादरताः पार्थ |
| | नान्यदस्तीति वादिनः ॥ ४२ ॥ | |
| | कामात्मानः स्वर्गपरा | |
| जन्मकर्मफलेप्सवः । | | जन्मकर्मफलप्रदाम् । |
| क्रियाविशेषबहुला | | क्रियाविशेषबहुलां |
| भोगैश्वर्यगतीः प्रति ॥ ४३ ॥ | | भोगैश्वर्यगतिं प्रति ॥ ४३ ॥ |
| | भोगैश्वर्यप्रसक्तानां | |
| | तयापहृतचेतसाम् । | |
| | व्यवसायात्मिका बुद्धिः | |
| | समाधौ न विधीयते ॥ ४४ ॥ | |
| | त्रैगुण्यविषया वेदा | |
| | निस्त्रैगुण्यो भवार्जुन । | |
| | निर्द्वन्द्वो नित्यसत्त्वस्थो | |
| | निर्योगक्षेम आत्मवान् ॥ ४५ ॥ | |
| | यावानर्थ उदपाने | |
| | सर्वतः संप्लुतोदके । | |
| | तावान् सर्वेषु वेदेषु | |
| | ब्राह्मणस्य विजानतः ॥ ४६ ॥ | |
| कर्मण्यस्त्वधिकारस्ते | | कर्मण्येवाधिकारस्ते |
| | मा फलेषु कदाचन । | |
| | मा कर्मफलहेतुर्भू- | |
| | र्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥ | |
| | योगस्थः कुरु कर्माणि | |
| | सङ्गं त्यक्त्वा धनंजय । | |

| काश्मीरपाठः। | साधारणपाठः। | शाङ्करपाठः। |
| --- | --- | --- |
| | सिद्ध्यसिद्ध्योः समो भूत्वा | |
| | समत्वं योग उच्यते ॥ ४८ ॥ | |
| यस्य सर्वे समारम्भा | | |
| निराशीर्बन्धनास्त्विह। | | |
| त्यागे यस्य हुतं सर्वे | | |
| स त्यागी स च बुद्धिमान् ॥ ४८ [* १] ॥ | | |
| | दूरेण ह्यवरं कर्म | |
| | बुद्धियोगाद्धनंजय। | |
| | बुद्धौ शरणमन्विच्छ | |
| | कृपणाः फलहेतवः ॥ ४९ ॥ | |
| बुद्धियुक्तो जहातीमे | | बुद्धियुक्तो जहातीह |
| | उभे सुकृतदुष्कृते। | |
| | तस्माद्योगाय युज्यस्व | |
| | योगः कर्मसु कौशलम् ॥ ५० ॥ | |
| | कर्मजं बुद्धियुक्ता हि | |
| | फलं त्यक्त्वा मनीषिणः। | |
| कर्मबन्धविनिर्मुक्ताः | | जन्मबन्धविनिर्मुक्ताः |
| | पदं गच्छन्त्यनामयम् ॥ ५१ ॥ | |
| यदा त्वं मोहकलिलं | | यदा ते मोहकलिलं |
| बुद्ध्या व्यतिरिष्यसि। | | बुद्धिर्व्यतितरिष्यति। |
| | तदा गन्तासि निर्वेदं | |
| | श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥ | |
| | श्रुतिविप्रतिपन्ना ते | |
| यदा स्थास्यति निश्चिता। | | यदा स्थास्यति निश्चला। |
| | समाधावचला बुद्धि- | |
| | स्तदा योगमवाप्स्यसि ॥ ५३ ॥ | |
| | स्थितप्रज्ञस्य का भाषा | |
| | समाधिस्थस्य केशव। | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| स्थिरधीः किं प्रभाषेत | | स्थितधीः किं प्रभाषेत |
| किमासीत व्रजेच्च किम् ॥ ५४ ॥ | | किमासीत व्रजेत किम् ॥ ५४ ॥ |
| | प्रजहाति यदा कामान् | |
| | सर्वान् पार्थ मनोगतान् । | |
| | आत्मन्येवात्मना तुष्टः | |
| | स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥ | |
| | दुःखेष्वनुद्विग्नमनाः | |
| | सुखेषु विगतस्पृहः । | |
| | वीतरागभयक्रोधः | |
| स्थिरधीर्मुनिरुच्यते ॥ ५६ ॥ | | स्थितधीर्मुनिरुच्यते ॥ ५६ ॥ |
| | यः सर्वत्रानभिस्नेह- | |
| | स्तत्तत् प्राप्य शुभाशुभम् । | |
| | नाभिनन्दति न द्वेष्टि | |
| स्थिरप्रज्ञस्तदोच्यते ॥ ५७ ॥ | | तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥ |
| | यदा संहरते चायं | |
| | कूर्मोऽङ्गानीव सर्वशः । | |
| इन्द्रियाणीन्द्रियार्थेभ्यः | | इन्द्रियाणीन्द्रियार्थेभ्य- |
| स्थिरप्रज्ञस्तदोच्यते ॥ ५८ ॥ | | स्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥ |
| | विषया विनिवर्तन्ते | |
| | निराहारस्य देहिनः । | |
| | रसवर्जं रसोऽप्यस्य | |
| | परं दृष्ट्वा निवर्तते ॥ ५९ ॥ | |
| यत् तस्यापि हि कौन्तेय | | यततो ह्यपि कौन्तेय |
| | पुरुषस्य विपश्चितः । | |
| | इन्द्रियाणि प्रमाथीनि | |
| | हरन्ति प्रसभं मनः ॥ ६० ॥ | |
| तानि संयम्य मनसा | | तानि सर्वाणि संयम्य |
| युक्त आसीत तत्परः । | | युक्त आसीत मत्परः । |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | वशी हि यस्येन्द्रियाणि | |
| स्थिरप्रज्ञः स उच्यते ॥ ६१ ॥ | | तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥ |
| | ध्यायतो विषयान् पुंसः | |
| सङ्गस्तेष्वभिजायते । | | सङ्गस्तेषूपजायते । |
| | सङ्गात् संजायते कामः | |
| | कामात् क्रोधोऽभिजायते ॥ ६२ ॥ | |
| | क्रोधाद्भवति संमोहः | |
| | संमोहात् स्मृतिविभ्रमः । | |
| | स्मृतिभ्रंशाद्बुद्धिनाशो | |
| | बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥ | |
| रागद्वेषविमुक्तैस्तु | | रागद्वेषवियुक्तैस्तु |
| | विषयानिन्द्रियैश्चरन् । | |
| | आत्मवश्यैर्विधेयात्मा | |
| | प्रसादमधिगच्छति ॥ ६४ ॥ | |
| | प्रसादे सर्वदुःखानां | |
| | हानिरस्योपजायते । | |
| | प्रसन्नचेतसो ह्याशु | |
| | बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥ | |
| | नास्ति बुद्धिरयुक्तस्य | |
| | न चायुक्तस्य भावना । | |
| | न चाभावयतः शान्ति- | |
| | रशान्तस्य कुतः सुखम् ॥ ६६ ॥ | |
| | इन्द्रियाणां हि चरतां | |
| | यन्मनोऽनुविधीयते । | |
| | तदस्य हरति प्रज्ञां | |
| | वायुर्नावमिवाम्भसि ॥ ६७ ॥ | |
| | तस्माद्यस्य महाबाहो | |
| निगृहीतानि सर्वतः । | | निगृहीतानि सर्वशः । |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | इन्द्रियाणीन्द्रियार्थेभ्य- | |
| | स्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥ | |
| | या निशा सर्वभूतानां | |
| | तस्यां जागर्ति संयमी । | |
| | यस्यां जाग्रति भूतानि | |
| सा रात्रिः पश्यतो मुनेः ॥ ६९ ॥ | | सा निशा पश्यतो मुनेः ॥ ६९ ॥ |
| | आपूर्यमाणमचलप्रतिष्ठं | |
| | समुद्रमापः प्रविशन्ति यद्वत् । | |
| | तद्वत् कामा यं प्रविशन्ति सर्वे | |
| | स शान्तिमाप्नोति न कामकामी ॥ ७० ॥ | |
| | विहाय कामान् यः सर्वान् | |
| | पुमांश्चरति निस्पृहः । | |
| | निर्ममो निरहंकारः | |
| | स शान्तिमधिगच्छति ॥ ७१ ॥ | |
| | एषा ब्राह्मी स्थितिः पार्थ | |
| | नैनां प्राप्य विमुह्यति । | |
| | स्थित्वास्यामन्तकालेऽपि | |
| | ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥ | |

## ॥ अध्यायः ३ ॥

| | | |
|---|---|---|
| | ज्यायसी चेत् कर्मणस्ते | |
| | मता बुद्धिर्जनार्दन । | |
| | तत् किं कर्मणि घोरे मां | |
| | नियोजयसि केशव ॥ १ ॥ | |
| व्यामिश्रेणैव वाक्येन | | व्यामिश्रेणेव वाक्येन |
| | बुद्धिं मोहयसीव मे । | |
| | तदेकं वद निश्चित्य | |
| | येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | लोकेऽस्मिन् द्विविधा निष्ठा | |
| मया प्रोक्ता पुरानघ । | | पुरा प्रोक्ता मयानघ । |
| | ज्ञानयोगेन सांख्यानां | |
| | कर्मयोगेण योगिनाम् ॥ ३ ॥ | |
| | न कर्मणामनारम्भा- | |
| | नैष्कर्म्यं पुरुषोऽश्नुते । | |
| | न च संन्यसनादेव | |
| | सिद्धिं समधिगच्छति ॥ ४ ॥ | |
| | न हि कश्चित् क्षणमपि | |
| | जातु तिष्ठत्यकर्मकृत् । | |
| | कार्यते ह्यवशः कर्म | |
| | सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥ | |
| | कर्मेन्द्रियाणि संयम्य | |
| | य आस्ते मनसा स्मरन् । | |
| | इन्द्रियार्थान् विमूढात्मा | |
| मूढाचारः स उच्यते ॥ ६ ॥ | | मिथ्याचारः स उच्यते ॥ ६ ॥ |
| | यस्त्विन्द्रियाणि मनसा | |
| | नियम्यारभतेऽर्जुन । | |
| | कर्मेन्द्रियैः कर्मयोग- | |
| | मसक्तः स विशिष्यते ॥ ७ ॥ | |
| | नियतं कुरु कर्म त्वं | |
| | कर्म ज्यायो ह्यकर्मणः । | |
| | शरीरयात्रापि च ते | |
| | न प्रसिद्ध्येदकर्मणः ॥ ८ ॥ | |
| | यज्ञार्थात् कर्मणोऽन्यत्र | |
| | लोकोऽयं कर्मबन्धनः । | |
| | तदर्थं कर्म कौन्तेय | |
| | मुक्तसङ्गः समाचर ॥ ९ ॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | सहयज्ञाः प्रजाः सृष्ट्वा | |
| | पुरोवाच प्रजापतिः । | |
| | अनेन प्रसविष्यध्व- | |
| | मेष वोऽस्त्विष्टकामधुक् ॥ १० ॥ | |
| | देवान् भावयतानेन | |
| | ते देवा भावयन्तु वः । | |
| | परस्परं भावयन्तः | |
| | श्रेयः परमवाप्स्यथ ॥ ११ ॥ | |
| इष्टान् कामान् हि वो देवा | | इष्टान् भोगान् हि वो देवा |
| | दास्यन्ते यज्ञभाविताः । | |
| | तैर्दत्तानप्रदायैभ्यो | |
| | यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥ | |
| | यज्ञशिष्टाशिनः सन्तो | |
| | मुच्यन्ते सर्वकिल्बिषैः । | |
| | भुञ्जते ते त्वघं पापा | |
| | ये पचन्त्यात्मकारणात् ॥ १३ ॥ | |
| | अन्नाद्भवन्ति भूतानि | |
| | पर्जन्यादन्नसंभवः । | |
| | यज्ञाद्भवति पर्जन्यो | |
| | यज्ञः कर्मसमुद्भवः ॥ १४ ॥ | |
| | कर्म ब्रह्मोद्भवं विद्धि | |
| | ब्रह्माक्षरसमुद्भवम् । | |
| | तस्मात् सर्वगतं ब्रह्म | |
| | नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥ | |
| | एवं प्रवर्तितं चक्रं | |
| | नानुवर्तयतीह यः । | |
| अल्पायुरिन्द्रियारामो | | अघायुरिन्द्रियारामो |
| | मोघं पार्थ स जीवति ॥ १६ ॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| यश्चात्मरतिरेव स्या- | | यस्त्वात्मरतिरेव स्या- |
| | दात्मतृप्तश्च मानवः । | |
| | आत्मन्येव च संतुष्ट- | |
| | स्तस्य कार्यं न विद्यते ॥ १७ ॥ | |
| | नैव तस्य कृतेनार्थो | |
| | नाकृतेनेह कश्चन । | |
| | न चास्य सर्वभूतेषु | |
| | कश्चिदर्थव्यपाश्रयः ॥ १८ ॥ | |
| | तस्मादसक्तः सततं | |
| | कार्यं कर्म समाचर । | |
| | असक्तो ह्याचरन् कर्म | |
| | परमाप्नोति पूरुषः ॥ १९ ॥ | |
| | कर्मणैव हि संसिद्धि- | |
| | मास्थिता जनकादयः । | |
| | लोकसंग्रहमेवापि | |
| | संपश्यन् कर्तुमर्हसि ॥ २० ॥ | |
| | यद्यदाचरति श्रेष्ठ- | |
| | स्तत्तदेवेतरो जनः । | |
| | स यत् प्रमाणं कुरुते | |
| | लोकस्तदनुवर्तते ॥ २१ ॥ | |
| | न मे पार्थास्ति कर्तव्यं | |
| | त्रिषु लोकेषु किंचन । | |
| नानुवासमवासव्यं | | नानवासमवासव्यं |
| प्रवर्तेऽथ च कर्मणि ॥ २२ ॥ | | वर्त एव च कर्मणि ॥ २२ ॥ |
| यद्यहं न प्रवर्तेयं | | यदि ह्यहं न वर्तेयं |
| | जातु कर्मण्यतन्द्रितः । | |
| मम वर्त्मानुवर्तेरन् | | मम वर्त्मानुवर्तन्ते |
| | मनुष्याः पार्थ सर्वशः ॥ २३ ॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| उत्सीदेयुरमी लोका | | उत्सीदेयुरिमे लोका |
| | न कुर्यां कर्म चेदहम् । | |
| | संकरस्य च कर्ता स्या- | |
| मपहन्यामिमाः प्रजाः ॥ २४ ॥ | | मुपहन्यामिमाः प्रजाः ॥ २४ ॥ |
| | सक्ताः कर्मण्यविद्वांसो | |
| | यथा कुर्वन्ति भारत । | |
| | कुर्याद्विद्वांस्तथासक्त- | |
| | श्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥ | |
| | न बुद्धिभेदं जनये- | |
| | दज्ञानां कर्मसङ्गिनाम् । | |
| योजयेत् सर्वकर्माणि | | जोषयेत् सर्वकर्माणि |
| | विद्वान् युक्तः समाचरन् ॥ २६ ॥ | |
| | प्रकृतेः क्रियमाणानि | |
| गुणैः कर्माणि भागशः । | | गुणैः कर्माणि सर्वशः । |
| | अहंकारविमूढात्मा | |
| | कर्ताहमिति मन्यते ॥ २७ ॥ | |
| | तत्त्ववित् तु महाबाहो | |
| | गुणकर्मविभागयोः । | |
| गुणा गुणार्थे वर्तन्त | | गुणा गुणेषु वर्तन्त |
| | इति मत्वा न सज्जते ॥ २८ ॥ | |
| | प्रकृतेर्गुणसंमूढाः | |
| | सज्जन्ते गुणकर्मसु । | |
| | तानकृत्स्नविदो मन्दान् | |
| | कृत्स्नविन्न विचालयेत् ॥ २९ ॥ | |
| | मयि सर्वाणि कर्माणि | |
| | संन्यस्याध्यात्मचेतसा । | |
| | निराशीर्निर्ममो भूत्वा | |
| | युध्यस्व विगतज्वरः ॥ ३० ॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
| --- | --- | --- |
| | ये मे मतमिदं नित्य- | |
| मनुवर्तन्ति मानवाः । | | मनुतिष्ठन्ति मानवाः । |
| | श्रद्धावन्तोऽनसूयन्तो | |
| मुच्यन्ते सर्वकिल्बिषैः ॥ ३१ ॥ | | मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥ |
| | ये त्वेतदभ्यसूयन्तो | |
| नानुवर्तन्ति मे मतम् । | | नानुतिष्ठन्ति मे मतम् । |
| | सर्वज्ञानविमूढांस्तान् | |
| विनष्टान् विद्ध्यचेतसः ॥ ३२ ॥ | | विद्धि नष्टानचेतसः ॥ ३२ ॥ |
| | सदृशं चेष्टते स्वस्याः | |
| | प्रकृतेर्ज्ञानवानपि । | |
| | प्रकृतिं यान्ति भूतानि | |
| | निग्रहः किं करिष्यति ॥ ३३ ॥ | |
| | इन्द्रियस्येन्द्रियस्यार्थे | |
| | रागद्वेषौ व्यवस्थितौ । | |
| | तयोर्न वशमागच्छेत् | |
| | तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥ | |
| | श्रेयान् स्वधर्मो विगुणः | |
| | परधर्मात् स्वनुष्ठितात् । | |
| | स्वधर्मे निधनं श्रेयः | |
| परधर्मोदयादपि ॥ ३५ ॥ | | परधर्मो भयावहः ॥ ३५ ॥ |
| | अथ केन प्रयुक्तोऽयं | |
| | पापं चरति पूरुषः । | |
| अनिच्छमानोऽपि बला- | | अनिच्छन्नपि वार्ष्णेय |
| दाक्रम्येव नियोजितः ॥ ३६ ॥ | | बलादिव नियोजितः ॥ ३६ ॥ |
| | काम एष क्रोध एष | |
| | रजोगुणसमुद्भवः । | |
| | महाशनो महापाप्मा | |
| | विद्ध्येनमिह वैरिणम् ॥ ३७ ॥ | |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| भवत्येष कथं कृष्ण<br>कथं चैव विवर्धते ।<br>किमात्मकः किमाचार-<br>स्तन्ममाचक्ष्व पृच्छतः ।। ३७ [*१] ।। | | |
| एष सूक्ष्मः परः शत्रु-<br>र्देहिनामिन्द्रियैः सह ।<br>सुखतन्त्र इवासीनो<br>मोहयन् पार्थ तिष्ठति ।। ३७ [*२] ।। | | |
| कामक्रोधमयो घोरः<br>स्तम्भहर्षसमुद्भवः ।<br>अहंकारोऽभिमानात्मा<br>दुस्तरः पापकर्मभिः ।। ३७ [*३] ।। | | |
| हर्षमस्य निवर्त्यैष<br>शोकमस्य ददाति च ।<br>भयं चास्य करोत्येष<br>मोहयंस्तु मुहुर्मुहुः ।। ३७ [*४] ।। | | |
| स एष कलुषः क्षुद्र-<br>श्छिद्रान्वेषी धनंजय ।<br>रजःप्रवृत्तो मोहात्मा<br>मानुषाणामुपद्रवः ।। ३७ [*५] ।। | | |
| | धूमेनाव्रियते वह्नि-<br>र्यथादर्शो मलेन च ।<br>यथोल्बेनावृतो गर्भ- | |
| स्तथा तेनायमावृतः ।। ३८ ।। | | स्तथा तेनेदमावृतम् ।। ३८ ।। |
| | आवृतं ज्ञानमेतेन<br>ज्ञानिनो नित्यवैरिणा ।<br>कामरूपेण कौन्तेय | |
| दुष्पूरणानलेन च ।। ३९ ।। | | दुष्पूरेणानलेन च ।। ३९ ।। |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
|---|---|---|
| | इन्द्रियाणि मनो बुद्धि- | |
| | रस्याधिष्ठानमुच्यते । | |
| | एतैविमोहयत्येष | |
| | ज्ञानमावृत्य देहिनम् ॥ ४० ॥ | |
| | तस्मात् त्वमिन्द्रियाण्यादौ | |
| | नियम्य भरतर्षभ । | |
| पाप्मानं प्रजहीह्येनं | | पाप्मानं प्रजहिह्येनं |
| | ज्ञानविज्ञाननाशनम् ॥ ४१ ॥ | |
| | इन्द्रियाणि पराण्याहु- | |
| | रिन्द्रियेभ्यः परं मनः । | |
| | मनसस्तु परा बुद्धि- | |
| | र्यो बुद्धेः परतस्तु सः ॥ ४२ ॥ | |
| एवं बुद्धेः परं मत्वा | | एवं बुद्धेः परं बुद्ध्वा |
| | संस्तभ्यात्मानमात्मना । | |
| | जहि शत्रुं महाबाहो | |
| | कामरूपं दुरासदम् ॥ ४३ ॥ | |

## ॥ अध्यायः ४ ॥

| | | |
|---|---|---|
| एवं विवस्वते योगं | | इमं विवस्वते योगं |
| | प्रोक्तवानहमव्ययम् । | |
| | विवस्वान् मनवे प्राह | |
| | मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥ | |
| एवं परंपराख्यात- | | एवं परंपराप्राप्त- |
| | मिमं राजर्षयो विदुः । | |
| | स कालेनेह महता | |
| | योगो नष्टः परंतप ॥ २ ॥ | |
| स एव च मया तेऽद्य | | स एवायं मया तेऽद्य |
| योगः प्रोक्तः सनातनः । | | योगः प्रोक्तः पुरातनः । |

| काश्मीरपाठः । | साधारणपाठः । | शाङ्करपाठः । |
| --- | --- | --- |
| | भक्तोऽसि मे सखा चेति | |
| रहस्यं चैतदुत्तमम् ॥ ३ ॥ | | रहस्यं ह्येतदुत्तमम् ॥ ३ ॥ |
| | अपरं भवतो जन्म | |
| | परं जन्म विवस्वतः । | |
| कथमेवं विजानीयां | | कथमेतद्विजानीयां |
| | त्वमादौ प्रोक्तवानिति ॥ ४ ॥ | |
| | बहूनि मे व्यतीतानि | |
| | जन्मानि तव चार्जुन । | |
| तान्यहं वेद्मि सर्वाणि | | तान्यहं वेद सर्वाणि |
| | न त्वं वेत्थ परंतप ॥ ५ ॥ | |
| | अजोऽपि सन्नव्ययात्मा | |
| | भूतानामीश्वरोऽपि सन् । | |
| | प्रकृतिं स्वामधिष्ठाय | |
| | संभवाम्यात्ममायया ॥ ६ ॥ | |
| | यदा यदा हि धर्मस्य | |
| | ग्लानिर्भवति भारत । | |
| | अभ्युत्थानमधर्मस्य | |
| तदात्मांशं सृजाम्यहम् ॥ ७ ॥ | | तदात्मानं सृजाम्यहम् ॥ ७ ॥ |
| | परित्राणाय साधूनां | |
| | विनाशाय च दुष्कृताम् । | |
| | धर्मसंस्थापनार्थाय | |
| | संभवामि युगे युगे ॥ ८ ॥ | |
| | जन्म कर्म च मे दिव्य- | |
| | मेवं यो वेत्ति तत्त्वतः । | |
| | त्यक्त्वा देहं पुनर्जन्म | |
| | नैति मामेति सोऽर्जुन ॥ ९ ॥ | |
| | वीतरागभयक्रोधा | |
| मन्मया मद्व्यपाश्रयाः । | | मन्मया मामुपाश्रिताः । |

| काश्मीरपाठः। | साधारणपाठः। | शाङ्करपाठः। |
|---|---|---|
| | बहवो ज्ञानतपसा | |
| | पूता मद्भावमागताः ॥ १० ॥ | |
| | ये यथा मां प्रपद्यन्ते | |
| | तांस्तथैव भजाम्यहम्। | |
| | मम वर्त्मानुवर्तन्ते | |
| | मनुष्याः पार्थ सर्वशः ॥ ११ ॥ | |
| | काङ्क्षन्तः कर्मणां सिद्धिं | |
| | यजन्त इह देवताः। | |
| | क्षिप्रं हि मानुषे लोके | |
| | सिद्धिर्भवति कर्मजा ॥ १२ ॥ | |
| | चातुर्वर्ण्यं मया सृष्टं | |
| गुणकर्मविभागतः। | | गुणकर्मविभागशः। |
| | तस्य कर्तारमपि मां | |
| | विद्ध्यकर्तारमव्ययम् ॥ १३ ॥ | |
| | न मां कर्माणि लिम्पन्ति | |
| न मे कामः फलेष्वपि। | | न मे कर्मफले स्पृहा। |
| | इति मां योऽभिजानाति | |
| | कर्मभिर्न स बध्यते ॥ १४ ॥ | |
| | एवं ज्ञात्वा कृतं कर्म | |
| | पूर्वैरपि मुमुक्षुभिः। | |
| | कुरु कर्मैव तस्मात् त्वं | |
| पूर्वैः पूर्वतरैः कृतम् ॥ १५ ॥ | | पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥ |
| | किं कर्म किमकर्मेति | |
| | कवयोऽप्यत्र मोहिताः। | |
| | तत् ते कर्म प्रवक्ष्यामि | |
| | यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥ | |
| कर्मणोऽपि हि बोद्धव्यं | | कर्मणो ह्यपि बोद्धव्यं |
| | बोद्धव्यं च विकर्मणः। | |

